| शिर्षक | ग्रंथकार | विषय | विस्तार (पूर्ण/ अपूर्ण) | लिपिकार | आकार | पृष्ठे | लिपी | सामग्री | Lines per page | Letters per line | Condition & age (शके/विक्रम सवंत) | Additional Particulars / Remark |
|---|---|---|---|---|---|---|---|---|---|---|---|---|
| शांतिसार | – | – | अपूर्ण | - | 3/12 | १० | संस्कृत | कागद | | | | |

M-2909

श्रीगणेशायनमः  श्रीरामकृष्णापितरंनत्वोमांबांसदाशिवंरामम्  दिनकरशर्मातनुतेशांतिकसारंसुखायविबुधानाम् १  ग्रंथेभि
न्शांतिसाराख्येयेमयार्थानिरूपिताः  तेषामादौसुबोधायक्रियतेनुक्रमःस्फुटम् २  कथितोयुतहोमोत्रलक्षहोमस्ततःपरम्  कोटिहोम
स्तस्यचो[illegible]भेदाःशतमुखादयः  आदित्यादिग्रहाणांचप्रत्येकंशांतयस्ततः  शनिस्तुतिर्ग्रहस्नानंग्रहयोगेचशांतिकम्  विवाहादौगुरो
[illegible]दिशांतयः  विरुद्धग्रहणेशांतिःशांतिर्वैनायकीततः  महारुद्रादिविधयस्तथारुद्राभिषेचनम्  पंचामृतेनस्नपनं
[illegible]हास्नानविधिस्तद्वन्महापूजातदुत्तरम्  त्वरितस्याथरुद्रस्यविधानंसमुदीरितम्  लिंगस्यपार्थिवस्याथपूजाच
[illegible]थसर्पस्यसंस्कारोवास्तुशांतिकम्  रजोदर्शनशांतिश्चशांतिर्वैधव्ययोगके  उर्कश्चार्कविवाहोथगोमुखप्रस
[illegible]गाःसिनीवाल्याश्चशांतिकम्  शांतिःकुहाश्चदर्शस्यमूलाश्लेषाविधिस्ततः  ज्येष्ठाशांतिस्ततःप्रोक्तानक्षत्रै
[illegible]वैधृत्यांसंक्रमेचैवशांतिकम्  नक्षत्राणांतिथीनांचगंडांतेशांतिकंततः  उत्तरादौदिनस्यापिक्षयेविषघटी
[illegible]कायमलोत्पत्तिशांतिकम्  शांतिःसदंतजननेत्रिकशांतिस्ततःपरम्  सिंहादौचप्रसूतस्यगवादेःशांतिकंततः
[illegible]शांतिस्ततःपरम्  रोगर्क्षतिथिवारादिशांतयोज्वरशांतयः  पंचकेचतथाशांतिस्त्रिपुष्करमृतेततः  त्रिपादर्क्षमृतेश[illegible]
राजाश्वगोपीडनेचकाकमैथुनदर्शने  वायसांतःप्रवेशेचपल्लीसरठशांतिकम्  कपोतस्यततःशांतिः[illegible]

ुत्यतेतथाशांतिरद्भुतानांचलक्षणम् उत्पातपाककालस्यशांतिःसाधारणीततः देवताम्योर्वृक्षवृष्ट्योर्जलानांचविक
वमृगेपक्षिविकारके अनिमित्तेगृहादेश्चपातेशांतिस्ततःपरम् नानोत्पातेषुशांतिश्चमृतजीवनशांतिकम् उल्का
ाद आगते हस्तिन्याश्वतथाधेनोर्मदेशांतिस्ततःपरम् शांतिर्भंगेश्वदंष्ट्राणांभंगेलिंगादिकस्यच दुःस्वप्नदर्श
तिकम् आद्योराजाभिषेकश्चप्रतिवर्षाभिषेचनम् सिंहासनच्छत्रविधिर्दुर्गस्यविधिरीरितः तत्रनवग्रह
ात प्रकृतित्वात्स आदौनिरूप्यतेसद्विविधः अयुतहोमादियुक्तःकेवलश्चेति तत्राद्योमात्स्यादावुक्तः द्वितीयोयाज
ो द्विविधस्यापिधर्माणांसंकरःप्रयोगपारिजातेउक्तः सकाम्योनैमित्तिकश्च कार्यारंभेषुसर्वेषुप्रतिष्ठास्वध्वरेषुच नवके
र्भाधानादिकर्मसु आरोग्यस्नानसमयेसंक्रांतौरोगसंभवे अभिचारेचयःकुर्याद्ग्रहपूजांविधानतः सोभीष्टफलमाप्नो
नसंशय इतिप्रयोगपारिजातेउत्पलपरिमलोक्तेः अत्रनिमित्तसप्तम्यानित्यत्वमपीतितन्नैवोक्तम् नित्येमंडपोनास्तीत्यप्युक्तं
थ नित्यंनैमित्तिकंहित्वासर्वमन्यत्समंडपम् कर्मांगभूतग्रहयज्ञोभ्युदयदिनात्पूर्वंसप्तदिनमध्येकार्यइत्युक्तंपारिजाते सत्रि
एकाग्निरनेककर्तृकः एकाग्निरेककर्तृकः अनेकाग्निरनेककर्तृकश्चेति आद्यस्यनिषेधः पारिजातेआश्वलायनोक्तेः एकस्त
डेषुकुर्याद्ग्रहमखंगुरुः बहुष्वहःसुचैकस्मिन्नन्हिवातद्विधानवित् एककुंडेतुनवभिर्नैवहोमःप्रशस्यते इदंचनवाचार्यपक्षे

म् अत्रशूद्राणामप्यधिकारः धर्मेप्सवस्तु धर्मज्ञाः सतांधर्ममनुष्ठिताः मंत्रवर्जंनदुष्यंति प्रशंसांप्राप्नुवंतिचेति शूद्रधर्म प्रकरणेम
ः यत्तिदंमेधातिथिर्व्याचरव्यौ मंत्ररहितोयोब्राह्मणादीनामुपवासादिधर्म उक्तस्तमनुतिष्ठंतः शूद्रानदुष्यंति नपुनः समंत्रकाण्यपि
र्जमनुतिष्ठंतोनदुष्यंतीति तदयुक्तंवाक्यवैयर्थ्यापत्तेः नचसमंत्रककर्मविधीनांशूद्रान्प्राप्तप्रवृत्तेः कर्मणिमंत्रवर्जितविधानुमश
नवाच्यम् मंत्रराहित्यविशिष्टकर्मविधौबाधकाभावात् तथाच ब्राह्मणादिकर्तृकोधानवदत्रकर्मभेदः यद्वात्रमंत्राभावः स
त्वेनविधीयते सच प्रकरणाच्छूद्रविषयः ननुयत्रतुलातडागोत्सर्गादौचतुर्णामपिवर्णानांशूद्रेणापिप्रकर्तव्यमित्यादिवचना
स्तत्रैवमंत्रवर्जितविधानमस्त्वितिचेन्न संकोचेप्रमाणाभावात् नचैवसंध्यावंदनादौशूद्रस्यमंत्रवर्जमधिकारः स्यादिति
त्राधिकारतावच्छेदकत्वात् किंचशूद्रस्यसमंत्रकतुलादानादावधिकारोरथकारवत् अतएवमाधवेन दक्षिणा
स्याहुर्विः ब्राह्मणस्तुभवेच्छूद्रः शूद्रस्तब्राह्मणोभवेदिति पराशरवाक्यं यत्रविप्रः शूद्रस्यदक्षिणामादाय तदीय
दैके मंत्रैर्जुहोति तत्रब्राह्मणस्यैवदोषः शूद्रस्तुहोमफलंलभेतैवेतिव्याख्यातम् तत्सिद्धौ ग्रहमखमूलाद्युत्पत्ति
तकारः अतएवमोक्षधर्मेशूद्रंप्रकृत्य मंत्रवर्जंनदुष्यंति कुर्वाणाः पौष्टिकींक्रियामित्युक्तम् कुमारीच शफभंपतिमिति
ऽस्याग्न्यभावादनधिकारः अस्यश्रौतत्वगार्ह्यत्वाभावेन लौकिकाग्न्यधिकरणत्वाच्छूद्रस्यचतत्सत्वात् अतएवमनुः
ाज

कऱ्माकुर्वी[illegible]ह्यंकर्मयथाविधि पंचयज्ञविधानंच पंक्तिंचान्वाहिकीं गृहीतिवैवाहिकपदेनदारकालदायाद्यकालहरणसं
रुच्यते स्मार्तकर्मविवाहाग्नौकुर्वीतमत्यहंगृही दायकालाहृतेवापिश्रौतंवैतानिकाग्निष्विति याज्ञवल्क्योक्तावपिस्म
मनूक्त्याउपसंहारात् तेनगार्ह्यस्यवैवाहिकाग्न्यधिकरणत्वादेतस्यस्मार्तत्वेन गार्ह्यत्वाभावात् लौकिकाग्न्यधिकरणत्वा
गार्ह्यमौपासनेकुर्यात्सर्वाधानींतुलौकिके स्मार्तंचलौकिकेकुर्याच्छ्रौतंवैतानिकाग्निष्विति स्मृत्यर्थसारेस्मार्तगार्ह्यं
तेनसर्वाधानिनःस्मार्तकर्मार्थेपुनःस्मार्ताग्न्युत्पादनार्थंवदन्वृत्तिकारः परास्तः स्मार्ताग्नौ नवग्रहमखइतिविज्ञानेश्व
त्यायविषयस्तत्सूत्रेतथोक्तेः अतएवविनायकशांतौलौकिकाग्निरेवउक्तः व्रतहेमाद्रौकालिकापुराणमपि स्त्रीबा
क्तहोतव्यंमत्यहंतथा सभ्येथोवावसथ्येवानतुकुंडेकदाचनेति सभायांभवःसभ्योलौकिकइत्यर्थः अवसथइतिगृहना
धीपाकाग्निरित्यर्थः कुंडपदेनश्रौतगार्ह्यौलक्ष्येतेतयोर्निषेधोनित्यानुवादस्तस्मादयुतहोमादिकंलौकिकाग्नावेव श्रौतस्मार्ताग्न्यो
ह्नम् अथायुतहोमादिविधिः मात्स्ये वैशंपायनमासीनमपृच्छच्छौनकःपुरा सर्वकामाप्तयेनित्यंकथंशांतिकपौष्टिकम् शांतिक
निष्टशामकम् पौष्टिकमैहिकफलजनकम् वैशंपायनउवाच श्रीकामःशांतिकामोवाग्रहयज्ञंसमाचरेत् वृष्ट्यायुःपुष्टिकामोवातथैवापि
चरन्मुनः ग्रहशांतिंप्रवक्ष्यामिपुराणश्रुतिचोदिताम् पुण्येन्हिविप्रकथितेकृत्वाब्राह्मणवाचनम् ग्रहान्ग्रहाधिदेवांश्चस्थाप्यहोमंसम

चरेत् ग्रहयज्ञास्त्रयःप्रोक्ताःपुराणश्रुतिभाषितम् गर्तस्योत्तर पूर्वेणवितस्तिद्वयविस्तृताम् वप्रद्वयवृतांवेदिंवितस्त्युच्छ्रायसंयुताम्
संस्थापनायदेवानांचतुरस्रामुदक्प्लवाम् स्कांदेतु तस्माच्चोत्तरपूर्वेणस्थंडिलंहस्तमात्रकम् त्रिवप्रंचतुरस्रंच वितस्त्युच्छ्रायसंमितमिति
वेदेःत्रिमेखलात्वमुक्तम् अग्निप्रणयनंकृत्वातस्यामावाहयेत्सुरान् देवतानांततःस्थाप्याविंशतिर्द्वादशाधिकाः सूर्यःसोमस्तथाभौ
मोबुधजीवसितार्कजाः राहुःकेतुरितिप्रोक्ताग्रहालोकहितावहाः संस्मरेद्रक्तमादित्यमंगारकसमन्वितम् सोमशुक्रौतथाश्वेतौ
जीवौचपिंगलौ मंदोराहुस्तथाकृष्णौधूम्रान्केतुगणान्विदुः ग्रहवर्णानिदेयानिवासांसिकुसुमानिच धूपामोदोत्रसुरभिरुपरि
नकम् शोभनंस्थापयेत्प्राज्ञःफलपुष्पसमन्वितम् गुडौदनंरवेर्दद्यात्सोमायघृतपायसम् अंगारकायसंयावंबुधायक्षीर
लोहितायहविष्यान्नमितिस्कांदेपाठः दध्योदनंतुजीवायशुक्रायचघृतौदनं शनैश्चरायकृसरमाजमांसंचराहवे चित्रौदनं
भक्ष्यैरथार्चयेत् स्कांदे मिश्रितंतिलमाषैश्चनैवेद्यंतुशनैश्चरे राहोर्मांसौदनंचैवकेतोश्चित्रौदनंतथेतिपाठः प्रागुत्तरेणतस्मा
भूषितम् चूतपल्लवसंछन्नंफलवस्त्रयुगान्वितम् पंचरत्नसमायुक्तंपंचभंगसमन्वितम् स्थापयेदव्रणंकुंभंवरुणंतत्रविन्यसेत्
रितःसर्वाःसमुद्राश्चसरांसिच गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् मृदमानीयविप्रेंद्रसर्वौषधिसमन्वितम् स्नानार्थंवि
नमानस्य[illegible] सर्वेसमुद्राःसरितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः एवमावाहयित्वातानमरान्
गजा

…मसमं… …यवंव्रीहितिलादिना अर्कःपलाशःखदिरस्त्वपामार्गोथपिप्पलः उदुंबरःशमीदूर्वाकुशाश्चसमिधस्त्विमाः एकैकस्य
मष्टाविंशतिवापुनः होतव्यामधुसर्पिभ्यांदध्नाचैवसमन्विताः प्रादेशमात्राःसमिधःसरलाअपलाशिनीः समिधःकल्पयेत्प्राज्ञःसर्व
दा देवानामपिसर्वेषामुपांशुःपरमार्थवित् स्वेनस्वेनैवमंत्रेणहोतव्याःसमिधःपृथक् होतव्यंचघृताद्युक्तंचरुभक्ष्यादिकंपुनः मंत्रैर्
होमंव्याहृतिभिस्ततः उदङ्मुखाःप्राङ्मुखावाकुर्युर्ब्राह्मणपुंगवाः दशेतिसंख्यादेवतादिविषया मंत्रवंतश्चकर्तव्याश्चरवःप्रतिदैव
चरुंसम्यक्ततोहोमंसमारभेत् आकृष्णेनेतिसूर्यायहोमःकार्योद्विजन्मना आप्यायस्वेतिसोमायमंत्रेणजुहुयात्पुनः अग्निर्मूर्धा
तिभौमायकीर्तयेत् अग्नेविवस्वदुषसइतिसोमसुतायवै बृहस्पतेपरिदीयारथेनेतिगुरोर्मतः शुक्रंतेअन्यदितिचशुक्रस्यापि
नैश्चरायतुपुनः शन्नोदेवीतिहोमयेत् कयानश्चित्रआभुवदितिराहोरुदाहृतः केतुंकृण्वन्निति ब्रूयात्केतूनामपिशांतये आवोरा
बलिहोमंसमारभेत् आपोहिष्ठेत्युमायास्तुस्योनेतिस्वामिनस्तथा विष्णोरिदंविष्णुरितित्वमित्स्वेतिस्वयंभुवः इंद्रमिद्देवतातयइंद्र
यात्पुनः तथायमस्यचायंगौरितिहोमःप्रकीर्तितः कालस्यब्रह्मजज्ञानमितिमंत्रःप्रशस्यते चित्रगुप्तस्यचाज्ञातमितिवेदविदोविदुः अ
दूतंवृणीमहेइतिवन्हेरुदाहृतः उदुत्तमंवरुणइत्यपांमंत्रःप्रकीर्तितः भूमेःपृथिव्यंतरिक्षमितिवेदेषुपठ्यते सहस्रशीर्षापुरुषइतिविष्णो
दाहृतः इंद्रायेंदोमरुत्वतइतिशक्रस्यशस्यते उत्तानपर्णेसुभगेइतिदेव्याःसमारभेत् प्रजापतेःपुनर्होमःप्रजापतइतिस्मृतः नमो

सर्पेभ्य इतिसर्पाणांमंत्रउच्यते एषब्रह्मायऋत्विजइतिब्रह्मण्युदाहृतः विनायकस्यचातूनइतिमंत्रोबुधैःस्मृतः जातवेदसेस्कनवामदुर्गामं

यमुच्यते आदित्यत्नस्यरेतस आकाशस्यउदाहृतः क्षाणाशिभ्भूर्महीनांतु नहद्द्वायोः प्रकीर्तितः एषोउषा अपूर्व्येत्याश्विनोर्मंत्रोयमुच्यते पू

हुतिंतु मूर्धानंदिवइत्याभिपातयेत् अथाभिषेकमंत्रेणवाद्यमंगलगीतकैः यजमानस्यकर्तव्यंचतुर्भिःस्नपनंद्विजैः सुरास्त्वामभिषिंचंतु

ह्मविष्णुमहेश्वराः वासुदेवोजगन्नाथस्तथासंकर्षणोविभुः प्रद्युम्नश्चानिरुद्धश्च भवंतुविजयायते आखंडलोग्निर्भगवान्यमोवैनि

स्तथा वरुणःपवनश्चैवधनाध्यक्षस्तथाशिवः ब्रह्मणासहिताःसर्वेदिक्पालाःपांतुतेसदा कीर्तिर्लक्ष्मीर्धृतिर्मेधापुष्टिःश्रद्धाक्रि

बुद्धिर्लज्जावपुःशांतिः कांतिस्तुष्टिश्चमातरः एतास्त्वामभिषिंचंतु धर्मपत्न्यःसमागताः आदित्यश्चंद्रमाभौमो बुधजीवसितार्कज

मभिषिंचंतु राहुःकेतुश्चतर्पिताः देवदानवगंधर्वायक्षराक्षसपन्नगाः ऋषयोमुनयोगावोदेवमातरएवच देवपत्न्योद्रुमान

प्सरसांगणाः अस्त्राणिसर्वशस्त्राणिराजानोवाहनानिच औषधानिचरत्नानिकालस्यावयवाश्चये सरितःसागराःशैलास्ती

दाः एतेत्वामभिषिंचंतुसर्वकामार्थसिद्धये ततःशुक्लांबरधरः शुक्लमाल्यानुलेपनः सर्वौषधैःसर्वगंधैःस्नापितोवेदपुंगवैः यज

त्नीकःसर्त्विजस्तुसमाहितः दक्षिणाभिःप्रयत्नेन पूजयेद्गतविस्मयः सूर्यायकपिलांधेनुंशंखंदद्यात्तथेंदवे रक्तंधुरंधरंदद्याद्भौमाय

नम् बुधायनागरूपंतुगुरवेपीतवाससी श्वेताश्वंगुरवेदद्यात्कृष्णांगामर्कसूनवे आयसंराहवेदद्यात्केतुभ्यश्छागमुत्तमं सुवर्णेनस

जमानेनदक्षिणाः सर्वेषामथवागावोदातव्याहेमभूषिताः सुवर्णमथवादद्याद्गुरुर्वायेनतुष्यति स्वमंत्रेणप्रदातव्याःसर्वाःसर्वत्र दक्षिणाः क
भूतानांपूजनीयासिरोहिणी तीर्थदेवमयीयस्मादतःशांतिंप्रयच्छमे पुण्यस्त्वंशंखपुण्यानांमंगलानांचमंगलम् विष्णुनाविधृतोनित्यमतःशांतिं
मे धर्मस्त्वंवृषरूपेणजगदानंदकारकः अष्टमूर्तेरधिष्ठानमतःपाहिसनातन हिरण्यगर्भगर्भस्त्वंहेमबीजंविभावसोः अनंतपुण्यफलदमत
च्छमे पीतवस्त्रयुगंयस्माद्वासुदेवस्यवल्लभम् प्रदानात्तस्यमेविष्णुरतःशांतिंप्रयच्छमे विष्णुस्त्वमश्वरूपेणयस्मादमृतसंभवः चंद्र
नित्यमतःशांतिंप्रयच्छमे यस्मात्त्वंपृथिवीसर्वाधेनुःकेशवसन्निभा सर्वपापहरानित्यमतःशांतिंप्रयच्छमे यस्मादायसकार्याणितवाधीना
लाघायुधादीनितस्माच्छांतिंप्रयच्छमे यस्मात्त्वंसर्वयज्ञानामंगत्वेनव्यवस्थितः यानंविभावसोर्नित्यमतःशांतिंप्रयच्छमे गवामंगेषुतिष्ठंति
श यस्मात्तस्माच्छिवंमेस्यादिहलोकेपरत्रच यस्मादशून्यंशयनंकेशवस्यशिवस्यच शय्याममाप्यशून्यास्तुदत्ताजन्मनिजन्मनि यथारत्ने
देवाःप्रतिष्ठिताः तथाशांतिंप्रयच्छंतुरत्नदानेनमेसुराः यथाभूमिप्रदानस्यकलांनार्हंतिषोडशीम् दानान्यन्यानिमेशांतिर्भूमिदानाद्भवत्विह एवंसंपू
वित्तशाठ्येनवर्जितः वस्त्रकांचनरत्नाद्यैर्धूपमाल्यानुलेपनैः अनेनविधिनायस्तुग्रहपूजांसमाचरेत् सर्वान्कामानवाप्नोतिप्रेत्यस्वर्गेमहीयते यस्तुपीडा
त्यमल्पवित्तस्यचग्रहः सतंयत्नेनसंपूज्यशेषानप्यर्चयेन्नरः स्कांदेतु तमेवपूजयेद्भक्त्यादक्षिणाभिःस्वशक्तितइत्युत्तरार्द्धंपठंति सदैवायुतहोमोयंनवग्रह
मखेस्मृतः विवाहोत्सवयज्ञेषुप्रतिष्ठादिषुकर्मसु निर्विघ्नार्थंमुनिश्रेष्ठतथोद्वेगाद्भुतेषुच वश्यकर्माभिचारादितथैवोच्चाटनादिकम् नवग्रहमखंकृत्वाततःकाम्यं

समारभेत् अन्यथाफलदंपुंसांनकाम्यंजायतेक्वचित् तस्मादयुतहोमस्यविधानंतुसमाचरेत् स्कांदे देवदानवगंधर्वायक्षराक्षसकिन्नराः पीड्यंतेग्रहपीडाभिः
किंपुनर्भुविमानवाः शनैश्चरेणसौदासौनरमांसेनियोजितः राहुणापीडितोराजानलोभ्रांतोमहीतले अंगारकविरोधेन रामोराष्ट्राद्विवासितः अष्टमेन
शशांकेनहिरण्यकशिपुर्हतः रविणासप्तमस्थेनरावणोविनिपातितः गुरुणाजन्मसंस्थेन हतोराजासुयोधनः पांडवाबुधपीडायांविकर्मणि
योजिताः षष्ठेनोशनसायुद्धेहिरण्याक्षोनिपातितः एतेचान्येचबहवोग्रहदोषैस्तुपीडिताः वृष्ट्यायुःपुष्टिकामोवाग्रहयज्ञंसमाचरेत्
स्वेकुर्याद्दत्विजश्चतुरःशुभान् अथवाचैकमभ्यर्च्यविधिनाब्रह्मणासह जन्मभूर्गोत्रमग्निश्च वर्णस्थानमुखानिच योऽज्ञात्वाकुरुते
बुनावमानिताः उत्पन्नोर्कःकलिंगेषुयमुनायांचचंद्रमाः अंगारकस्त्ववंत्यांचमगधायांहिमांशुजः सैंधवेषुगुरुर्जातःशुक्रोभो
मनैश्चरस्तुसौराष्ट्रेराहुर्वैराठिनापुरे अंतर्वेद्यांतथाकेतुरित्येताग्रहभूमयः यस्ययस्यचयद्गोत्रंतत्तद्दस्याम्यतःपरम् आदित्यःक
नआत्रेयश्चंद्रमाभवेत् भारद्वाजोभवेद्भौमस्तथात्रेयश्चसोमजः शक्रपूज्योंगिरोगोत्रःशुक्रोवैभार्गवस्तथा शनिःकाश्यपएव
ठीनसिस्तथा केतवोजैमिनीयाश्चग्रहाग्निस्तदनंतरम् आदित्येकपिलोनामपिंगलःसोमउच्यते धूमकेतुस्तथाभौमेजाठराग्निर्बुधे
रोश्चैवशिखीनामशुक्रेभवतिपावकः शनैश्चरेमहातेजाराहुकेत्वोर्हुताशनः भास्करांगारकौरक्तौश्वुक्लौशुक्रनिशाचरौ सोमपुत्र
तावुभौपीतकौस्मृतौ कृष्णंशनैश्चरंविंद्याद्राहुंचित्राश्चकेतवः मध्येतुभास्करंविंद्याच्छशिनंपूर्वदक्षिणे दक्षिणेलोहितंविंद्याद्

त्तरेणतु उत्तरेतुगुरुंविंद्यात्पूर्वेणैवतुभार्गवम् पश्चिमेतुशनिंविंद्याद्राहुंदक्षिणपश्चिमे पश्चिमोत्तरतःकेतुःस्थाप्योवैशुक्लतंदुलैः अथ

केः कार्याःस्वस्ववर्णादिधातुभिः शुक्रार्कौप्राङ्मुखौज्ञेयौगुरुसौम्यावुदङ्मुखौ प्रत्यङ्मुखःशनिःसोमःशेषादक्षिणतोमुखाः प्रत्यङ्मु

दृष्टी उदङ्मुखौवामदृष्टी प्रत्यङ्मुखावधोदृष्टी दक्षिणतोमुखाःदक्षिणदृष्टयः आदित्याभिमुखाइत्युक्तेरितिहेमाद्रिः वर्णरूपगुणैर्यु

त्यावाहयेत्तुतान् वक्ष्येस्थानानिदेवानामीश्वरादियथाक्रमम् सूर्यस्यैवोत्तरंशंभुमुमांसोमस्यदक्षिणे स्कंदमंगारकस्यैवदक्षिणस्यं

सौम्यात्पश्चिमतोविष्णुंब्रह्माजीवस्यपूर्वतः इंद्रमैंद्यांसिताद्विंद्यान्मंदादाग्नेयतोयमं राहोःपूर्वोत्तरेकालंसर्वभूतभयावहं केतोर्नै

ऋचित्रगुप्तंनिधापयेत् उत्तरेशनिसूर्याभ्यांगुरुकेत्वोश्चदक्षिणे गणाधिपःप्रतिष्ठाप्यःसर्वदेवनमस्कृतः भानुंतुमंडलाकारंसोमं

अंगारकंत्रिकोणंचबुधंबाणाकृतिंतथा गुरुंदीर्घंचतुरस्रंपंचास्रंभार्गवंतथा धनुस्तुल्यंशनिंविंद्याद्राहुंशूर्पाकृतिंतथा ध्वजाकारं

णेशंतत्ररूपिणम् स्थापयेच्छुक्लतंदुलैरित्येतस्मिन्पक्षेमंडलाकारेणस्थापनमितिहेमाद्रिः दिवाकरकुजाभ्यांहिदापयेद्रक्तचंदनं

र्गवेचैवसितवर्णंप्रदापयेत् कुंकुमेनतुसंयुक्तंचंदनंजीवसौम्ययोः अगुरुंचंदनंदद्याद्राहुकेत्वर्कजेषुच ग्रहवर्णानिपुष्पाणिगायत्र्याधूपमाद

रवेःकंदुरकंधूपंशशिनस्तुघृताक्षताः भौमेसर्जरसंचैवअगुरुंचबुधेस्मृतं सिल्हकंगुरवेदद्याच्छुक्रेबिल्वगिरंतथा गुग्गुलंमंदचारेतुलाक्षाराहो

तवे उद्दीप्यस्वेतिमंत्रेणदीपंदद्यादतंद्रितः अन्नहीनोदहेद्राष्ट्रंमंत्रहीनस्तुऋत्विजः यजमानमदाक्षिण्योनास्तियज्ञसमोरिपुः अहिंसकस्यदांतस्

धर्मार्जितधनस्यच नित्यंचनियमस्थस्यसदासानुग्रहाग्रहाः ग्रहागावोनरेंद्राश्च ब्राह्मणाश्चविशेषतः पूजिताःपूजयंत्येतेनिर्दहंत्यपमानिताः ग्र
णामिदमातिथ्यंकुर्यात्संवरादपि आरोग्यबलसंपन्नोजीवेच्चशरदांशतं ग्रहप्रतिमालक्षणं मात्स्ये पद्मासनःपद्मकरःपद्मगर्भसमद्युतिः सप्ताश्व
थसंयुक्तोद्विभुजःस्यात्सदारविः श्वेतःश्वेतांबरधरोदशाश्वःश्वेतवाहनः गदापाणिर्द्विबाहुश्चकर्तव्योवरदःशशी रक्तमाल्यांबरधरःशक्ति
गदाधरः चतुर्भुजोमेषगामीवरदःस्यादंगारकस्तः पीतमाल्यांबरधरःकर्णिकारसमद्युतिः खड्गचर्मगदापाणिःसिंहस्थोवरदोबुधः दे-
रूतद्वत्पीत श्वेतौचतुर्भुजौ दंडिनौवरदौकार्यौसाक्षसूत्रकमंडलू इंद्रनीलद्युतिःशूलीवरदोगृध्रवाहनः बाणबाणासनधरःकर्तव्यो
ा करालवदनःखड्गचर्मशूलीवरप्रदः नीलसिंहासनस्थश्चराहुरत्रप्रशस्यते धूम्राद्विबाहवःसर्वेगदिनोविकृताननाः गृध्रास-
कृतवस्युर्वरप्रदाः सर्वेकिरीटिनःकार्याग्रहालोकहितावहाः अंगुलेनोच्छ्रिताःसर्वेशतमष्टोत्तरंसदा याज्ञवल्क्यः ताम्रकात्स्वप्
मात्स्वर्णजावुभौ रजतादायसःसाक्षात्कांस्यात्कार्यानवग्रहाः ब्रह्मयामलेतु ताम्राच्चुकारयेद्भानुंरजतेननिशाकरम् कुजजीवज्ञरू
र्णेनतुकारयेदितिविशेषः अथलक्षहोमविधिर्मात्स्ये कथितोयुतहोमोयंलक्षहोममतःशृणु सर्वकामाप्तयेयस्माल्लक्षहोमंविदुर्बुधाः
वल्लभःसाक्षाद्भुक्तिमुक्तिफलप्रदः ग्रहताराबलंलब्ध्वाकृत्वाब्राह्मणवाचनम् गृहस्योत्तरपूर्वेणमंडपंकारयेद्बुधः रुद्रायतनभूमौवाचतु
कुःपूर्वम् दशहस्तानथाष्टौवाहस्तान्कुर्याद्विधानतः प्रागुत्तरप्लवांभूमिंकारयेद्यत्नतोनरः प्रागुत्तरंसमासाद्यप्रदेशंमंडपस्यतु शो

नकुंडयथाविह्नलक्षणान्वितम् नवग्रहमखेकुंडंहस्तमात्रंप्रशस्यते चतुरस्रंसमंतत्तुयोनिवक्त्रंसमेखलम् चतुरंगुलविस्ताराभेखलातद्वदु

प्रागुदक्प्रवणाकार्यासर्वतःसमविस्तृता शांत्यर्थंसर्वलोकानांनवग्रहमखेस्मृता मानहीनाधिकंकुंडमनेकभयदंभवेत् यस्मात्तस्मा

शांतिकुंडंविधीयते अस्माद्दशगुणइत्यग्रेदर्शनादेतावत्पर्यंतंअयुतहोमांगविधानम् इदंचकुंडपरिमाणंनलक्षहोमे तत्रपरिमाण

नात् किंत्वयुतहोमे अस्माद्दशगुणःप्रोक्तोलक्षहोमःस्वयंभुवा आहुतीभिस्तथान्नेनदक्षिणाभिस्तथैवच आहुतीभि

त्राहुति ग्रहणंवसिष्ठसंहितायामयुतहोमादित्रयपुरस्कारेणतत्राष्टशतादिसंख्याविधानात् अन्नेनेतिब्राह्मणभोजनेनेत्यर्थः

मन्तृतंतद्वच्चतुर्हस्तायतंपुनः लक्षहोमेभवेत्कुंडंयोनिवक्त्रंत्रिमेखलम् तद्वच्छब्दोविकल्पार्थः वक्त्रंकंठः योनिश्चवक्त्रंचत्रिमे

र्ध्वंतेयस्येत्यर्थः तस्यचोत्तरपूर्वेणवितस्त्युच्छ्रायसंमितम् प्रागुदक्प्रवणंतत्रचतुरस्रंसमंततः विष्कंभार्द्धोच्छ्रितंप्रोक्तंस्थंडि

र्मणा विष्कंभार्द्धमष्टादशांगुलानिवप्रांगुलसहितानि संस्थापनायदेवानांवप्रत्रयसमावृतम् द्व्यंगुलोच्छ्रितोवप्रःप्रथमःस

त्र्यंगुलोच्छ्रायसंयुक्तंवप्रद्वयमथोपरि त्र्यंगुलस्यचविस्तारःसर्वेषांकथ्यतेबुधैः दशांगुलोच्छ्रिताभित्तिःस्थंडिलस्यतथोपरि तस्मि

वाहयेद्देवान्पूर्ववत्सुष्यतंडुलैः आदित्याभिमुखाःसर्वेसाधिप्रत्यधिदेवताः स्थापनीयामुनिश्रेष्ठनोत्तरेणपराङ्मुखाः गरुत्मानधिक

त्रसंपूज्योभूतिमिच्छता सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिनः विषपापहरोनित्यमतःशांतिंप्रयच्छमे पूर्ववत्कुंभमामंत्र्यतद्वत्योमं

मारभेत् सहस्राणांशतंहुत्वासमित्संख्याधिकंपुनः घृतकुंभवसोर्धारांपातयेदनलोपरि औदुंबरीमथार्द्रांचसर्वशाखाविवर्जितां बाहु-
त्रांस्रुचंकृत्वाततस्तंभद्वयोपरि घृतधारांतयासम्यगग्नेरुपरिपातयेत् श्रावयेत्सूक्तमाग्नेयंवैष्णवंरौद्रमैंदवम् महावैश्वानरंसामज्येष्ठंसाम
पाठयेत् स्नानंचयजमानस्यपूर्ववन्मंत्रवाचनम् स्नानमभिषेकः पूर्ववत्सुरास्त्वेत्यादिमंत्रैः दातव्यायजमानेनपूर्ववद्दक्षिणाःपृथक् [illegible]
क्रोधविहीनेनऋत्विग्भ्यःशांतचेतसा नवग्रहमखेविप्राश्चत्वारोवेदवेदिनः अथवाऋत्विजोशांतौद्वावेवश्रुतिकोविदौ कार्यौव-
न्नप्रसज्जेतविस्तरे तद्वच्चेदथवाचाष्टौलक्षहोमेतुऋत्विजः कर्तव्याःशक्तितस्तद्वच्चत्वारोवाविमत्सराः नवग्रहमखेसर्वलक्षहोमे
[illegible]त्वादद्यान्मुनिश्रेष्ठभूषणान्यपिशक्तितः शयनानिसवस्त्राणिहैमानिकटकानिच कर्णांगुलिपवित्राणिकंठसूत्राणिशक्तिमान्
[illegible]त्त्याहौवात्रीन्वायथाविधि एकमप्यर्चयेद्भक्त्याब्राह्मणंवेदपारगम् दक्षिणाभिःप्रयत्नेननबहूनल्पवित्तवान् अनेनैकाचम
योगउक्तः लक्षहोमस्तुकर्तव्योयथावित्तंभवेद्बहु पुत्रार्थीलभतेपुत्रंधनार्थीलभतेधनम् भार्यार्थीलभतेभार्यांकुमारीचश
भ्रष्टराज्यस्तथाराज्यंश्रीकामःश्रियमाप्नुयात् यंयंप्रार्थयतेकामंतंतंप्राप्नोतिपुष्कलम् निष्कामःकुरुतेयस्तुसपरंब्रह्मगच्छति
टिहोमविधिर्मात्स्ये तस्माच्छतगुणःप्रोक्तःकोटिहोमःस्वयंभुवा आहुतीभिःप्रयत्नेनदक्षिणाभिःफलेनच पूर्ववद्ग्रहदेवानाम
[illegible] [illegible]तथाचोक्ताःस्नानेदानेतथैवच कुंडमंडपवेदीनांविशेषोयंनिबोधमे चतुर्हस्तंभवेत्कुंडंचतुरस्रंसमंततः यो[illegible]

धापत्तं तदाप्याहुस्त्रिमेखलम् द्व्यंगुलोच्छ्रिताकार्या प्रथमामेखलाबुधैः त्र्यंगुलोच्छ्रितातद्वद्द्वितीयापरिकीर्तिता उच्छ्रायविस्त
तृतीयाच्चतुरंगुला चतुरंगुलविस्तारः पूर्वयोरपिशस्यते वितस्तिमात्रायोनिःस्यात् षट्सप्तांगुलविस्तृता वितस्तिशब्दः कुंडार्थपर
न्नतामध्येपार्श्वयोश्चांगुलोच्छ्रिता गजोष्ठसदृशीतद्वदायताच्छिद्रसंयुता एतत्सर्वेषुकुंडेषुयोनिलक्षणमिष्यते मेखलोपरि
त्थदलसंनिभा वेदीचकोटिहोमेस्याद्वितस्तीनांचतुष्टयं चतुरस्रासमातद्वत्त्रिभिर्वप्रैःसमावृता वप्रप्रमाणंपूर्वोक्तंवेदिकाया
न यथाषोडशहस्तःस्यान्मंडपश्चचतुर्मुखः पूर्वद्वारेषुसंस्थाप्यबह्वृचंवेदपारगं यजुर्वेदंतथायाम्येपश्चिमेसामवेदिनं अथर्व
म स्थापयेद्बुधः अष्टौतुहोमकाःकार्यावेदवेदांगवेदिनः एवंद्वादशतान्विप्रान्वस्त्रमाल्यानुलेपनैः पूर्ववत्पूजयेद्भक्त्यासर्वा
रात्रिसूक्तंचरौद्रंचपावमानंसुमंगलं पूर्वतोबह्वृचःशांतिंपठन्नास्तउदङ्मुखः शाक्रंरौद्रंचसौम्यंचकूष्मांडंजातवेदसम् पा
रेयजुर्वेदिनमुत्तमं सुपर्णमथवैराजमाग्नेयंरुद्रसंहितां ज्येष्ठसामतथाशांतिंछंदोगःपश्चिमेपठेत् शांतिसूक्तंचसौरंचतथाशाकु
पौष्टिकंचमहाराजमुत्तरेणाप्यथर्ववित् पंचभिःसप्तभिर्वापिहोमःकार्योत्रपूर्ववत् द्वादशसंख्यैरित्यर्थः वाशब्दश्चपूर्वोक्तापेक्षया स्नाने
मंत्रास्तुतएवमुनिसत्तमाः वसोर्धाराविधानंचलक्षहोमवदिष्यते अनेनविधिनायस्तुकोटिहोमंसमाचरेत् सर्वान्कामानवाप्नोतिततोविष्णु
दंव्रजेत् यःपठेच्छृणुयाद्वापिग्रहयज्ञत्रयंनरः सर्वपापविशुद्धात्मापदमिंद्रस्यगच्छति अत्रनिकायिनांतुपूर्वस्येतिन्यायेनग्रहयज्ञलक्ष

न्येनउत्तरोत्तरस्यपूर्वपूर्वविकारत्वं तस्यैवचलक्षहोमवदित्यनुवादः अथपदार्थाः मार्कंडेयः शिरःस्नातस्तुकुर्वीतदैवंपित्र्यमथापि[illegible] प्राङ्मुख
दङ्मुखोवापिश्मश्रुकर्मचकारयेत् सएव देवार्चनादिकार्याणितथागुर्वभिवादनं कुर्वीतसम्यगाचम्यप्रयतोपिसदाद्विजः इद्दमनुः प्राणा
यम्यकुर्वीतसर्वकर्माणिसंयुतः मार्कंडेयः संकल्प्यविधिवत्कुर्यात्स्नानदानव्रतादिकं तत्रादौगणेशपूजा आदौविनायकःपूज्य अंतेचकु[illegible]
तिगृह्यपरिशिष्टात् नऋतेत्वत्क्रियतेकिंचनेतिमंत्रलिंगाच्च ततोनांदीश्राद्धंपुण्याहवाचनमितिगर्भाधानादिसंस्कारेष्विष्टापूर्तक्रतुष्वपि
[illegible]इंपुराकार्यंकर्मादौस्वस्तिवाचनमितित्रिकांडीस्मरणात् शौनकः पुण्याहवाचनविधिंवक्ष्यामोथयथाविधि प्रयोक्तुःकर्मणामादा[illegible]
[illegible]हृये गणेशपूजोत्तरत्वंवाचारात् छंदोगपरिशिष्टे कर्मादिषुतुसर्वेषुमातरःसगणाधिपाः पूजनीयाःप्रयत्नेनपूजिताःपूजयंतिता
[illegible]शुभ्रासुलिखितावापटादिषु अपिवाक्षतपुंजेषुनैवेद्यैश्चपृथग्विधैः कुड्यलग्नांवसोर्द्धारांसप्तधारांघृतेनतु कारयेत्पंचधारांवा
चोच्छ्रितां आयुष्याणिचशांत्यर्थंजप्त्वातत्रसमाहितः षड्भ्यःपितृभ्यस्तदनुश्राद्धदानमुपक्रमेत् अत्रसर्वेष्वितिसर्वत्रानुषज्यत
शमातृपूजावसोर्द्धारानांदीश्राद्धानांसर्वकर्मांगत्वं मातृशब्देनगौर्यादिदेवमातरोब्राह्म्यादिमनुष्यमातरश्चगृह्यंते शातातपोपि नानि
नूश्राद्धंकर्मकिंचित्समाचरेत् कन्यापुत्रविवाहेषुप्रवेशेनववेश्मनः नामकर्मणिबालानांचूडाकर्मादिकेतथा सीमंतोन्नयनेचैवपुत्रादिमुख
[illegible]दीमुखान्पि[illegible]दौतर्पयेत्प्रयतोगृहीत्यस्यकन्यापुत्रेत्यादिवचनैरुपसंहारोक्तं नचनानिष्ट्वापितृयज्ञेनवैदिकंकिंचिदाचरेन्नवग्रहर

[illegible] उभयोरेकस्मृतिगतत्वेनोपसंहारयोगात् नाष्टकासु भवेच्छ्राद्धं नश्राद्धे श्राद्धमिष्यते नसोष्यंतीजातकर्म
गतकर्मस्विति च्छंदोगपरिशिष्टस्य वैयर्थ्यापत्तेश्च ततोऋत्विग्वरणं तेचायुतहोमेचत्वारोद्वौवा नवग्रहमखेविप्राश्चत्वारोवेदवादि
वाऋत्विजोशांतौ द्वावेकश्रुतिकोविदौ कार्यावयुतहोमेतु नप्रसज्जेनविस्तर इतिमात्स्यात् चतुःपक्षेब्रह्माचार्यौ द्वौचर्त्विजावितिहे
क्षेब्रह्माचार्यौ अथवाचैकमभ्यर्च्यैद्विधिनाब्रह्मणासहेतिस्कांदात् लक्षहोमेतुमात्स्ये तद्वद्द्वादशवाष्टौवालक्षहोमेपिऋत्विजः कर्त
त्तद्वच्चत्वारोवाविमत्सराः आचार्यब्रह्मसहितानामेवेयंसंख्या कोटिहोमेतुमात्स्ये एवंद्वादशवाविप्रान्वस्त्रमाल्यानुलेपनैः वसिष्ठ
नलक्षकोटिहोमानुपक्रम्यषोडशब्राह्मणांश्छुद्धान्दंभानृतविवर्जितान् तेषांमध्येश्रेष्ठतममाचार्यंतंप्रकल्पयेदित्युक्का आचार्ये
ग्रहार्चनफलंनत इत्युक्तेर्नवाचार्याएकोब्रह्माषट्ऋत्विजइतिपक्षउक्तः अस्मिंश्चपक्षेएकेनाचार्यकर्मकार्यमपरेतमन्वारभेरन्नुपक्रमो
विरोधादित्युक्तं प्रयोगपारिजाते अयंचपक्षोयुतहोमादिरहितनवग्रहमखेपिभवतीत्युक्तं तत्रैव अत्रचधेन्वादिनवग्रहदक्षिणानवम्यो
द्रिरुक्त कोटिहोमेयदिफलकालानुरोधेनसमाप्तिः शीघ्रमिष्टातदाविंशतिचतुर्विंशतिद्वात्रिंशच्चतुःषष्टिशतंवाऋत्विजोवृणुयादित्यूचेभविष्ये
पि नियोजयेद्द्विजांस्तत्रशतसंख्यान्नृपोत्तम अलाभेतुबहूनांचयथालाभंनियोजयेत् नसंख्यानियमश्चात्रब्राह्मणानांनरोत्तम नकालनियमः
वस्त्वेच्छयायज्ञउच्यते जापकद्वारपालाश्चसर्वपक्षेषुभिन्ना इतिहेमाद्रिः ततोमधुपर्कः संपूज्यमधुपर्केणऋत्विजःकर्मकारयेत् अपूज्यकारये

कर्मकिल्बिषेऐवयुज्यते इतिविश्वामित्रोक्तेः पूर्वोक्तमात्स्योक्तेश्च लैंगे वस्त्रयुग्मंतथाप्यूरंकेयूरंकर्णभूषणं अंगुलीभूषणंचैवमणिबंधस्य
षणं कंठाभरणयुक्तानिप्रारंभेधर्मकर्मणः पुरोहितायदत्वाथऋत्विग्भ्यश्चापिदापयेत् अप्यूरोजलपात्रंमंत्रवद्दरणंमधुपर्कइतिकेचित्
पर्कस्यवरणांगत्वा द्यत्रवरणंतत्रमधुपर्कइतिवृत्तिकृत् वस्कतोऋत्विजोवृत्वामधुपर्कमाहरेत् इत्यत्रक्रममात्रविधिनामधुपर्कस्यनवरू
किंतूभयोःऋत्विगंगत्वं तेनस्मान्नेमंत्रवद्दरणाभावेपिऋत्विजोवृत्वामधुपर्कोभवतितेनात्रवरणोत्तरमाशौचादिपातेनऋत्विव
रित्युक्तं मधुपर्कोत्तरंकर्तव्यं मात्स्ये यजमानःसपत्नीकःपुत्रपौत्रसमन्वितः पश्चिमद्वारमाश्रित्यप्रविशेद्यागमंडपं संग्रहे
सिद्धार्थान्किरेद्रक्षोघ्नमंत्रतः प्रतिष्ठासारे सर्वतःपंचगव्येनप्रोक्षयेद्यागमंडपं आपोहिष्ठाव्यृचेनैवततःस्वस्त्ययनंजपेत्
अंगसंकोचयन्नंतःप्रविशेद्दक्षिणांघ्रिणा नैर्ऋत्यांदिशिवास्त्वीशंब्रह्माद्यांश्वसमर्चयेत् हेमाद्रौतु तोरणपूजोत्तरंवास्तुपूजोक्ता
विश्याथतोरणादिप्रपूज्यच वास्तुयागंततःकुर्यात्प्रासादेमंडपेथवा वास्तुपूजनंसहोमकंवा शारदायां पायसान्नैर्बलीन्हरेदि
क्तेः ततस्त्कलापुरुषवन्मंडपपूजा ततोग्निस्थापनं तत्रायुतहोमः एकहस्तंकुंडं लक्षहोमेद्विहस्तं चतुर्हस्तंवा कोटिहोमेषोडशह
तथोक्तेः कुंडंचमंडपेशानभागेतदीशानभागेवेदिरिति हेमाद्रिः तथाच वेदीमंडपाद्दहिर्भागेवापीष्टा वसिष्ठसंहितायां अयुत
[illegible]भागेतुकारयेच्चतुरस्त्रकं कुंडस्येशानभागेतुपूजावेदिंप्रकल्पयेदित्युक्तं भविष्येतुकोटिहोमंप्रकृत्य कुंडस्यप

...द्युधा...दक्षिणइत्युक्तं गोभिलेनतु कुंडस्यप्रागुदीच्यांवाप्राच्यामुत्तरतोपिवा चतुरस्रंचतुर्द्वारंकर्तव्यंग्रहपीठकं श्रीकामःपूर्व...

पुष्ट्यर्थेदक्षिणेनतु पश्चाद्विजन्मसिध्यर्थंशांत्यर्थंचोत्तरेणतु ईशान्यांसर्वकामायचाग्नेयांचाभिचारके नैर्ऋत्यांपुत्रलाभायपुष्ट्य...

नत्वित्युक्तं स्थंडिलपक्षेपिवेदिरावश्यकी शिष्टाचारादितिपारिजातः गोद्भवंगौरीतिलकंतिलकंलिंगमाल्यपि लतावितानिकाप्य...

भिमानिषट् मंडलान्यागमोक्तानिभवंतिधूतयेभृशं कपालोदरवस्वाख्यंशूलमाल्याभिधंतथा शैवंवैष्णवचक्रंचेत्युदितंमं...

...हरस्यचप्रीत्यैभवेदित्यागमोदितं ग्रहादेर्मंडलंभानोः सर्वतोभद्रमर्चने लक्ष्म्याश्चसर्वतोभद्रंपूजनेमंडलंतथा सिंहो...

...ग्नोदरसमाह्वयं वाग्देव्याःसर्वतोभद्रंमंडलंचधराह्वयं भगवत्यादिकानांचशक्तीनांमंडलंभवेत् पूजनेसर्वतोभद्रमेकलिंग...

...रवक्षेत्रपालादिपूजनेमंडलानितु सर्वतोभद्रमुख्यानिशैवोक्तान्यखिलान्यपि यतःस्यात्सर्वतोभद्रंसर्वदेवप्रियप्रदं सर्वेषां

प्रकृतित्वेननिश्चितं अतोभिधीयतेतस्यसमुद्धारेयथागमं अन्येषांमंडलानांतुसर्वेषामितिविस्तरात् शैवादिष्वागमग्रंथेषु...

ल्पनं तत्वसागरसंज्ञायांसंहितायांप्रपंचितं यथाविधिबृहत्संचरात्रादिष्वागमेष्वपि निम्नतोत्तुंगताहीनेस्फुश्लक्ष्णेवेदिकातले ई...

दिप्लुवेनार्द्रेविलिप्तेगोमयेनच धत्तूरपल्लवैर्धूर्ष्टैर्यद्वापामार्गपल्लवैः देवाराधनमंत्रेणमंत्रितासंचगव्यतः अभ्युक्षितेरुचमंत्रेणकृत्वादि

साधनंततः स्वद्विकामानसूत्रंचगंधाद्यैरभिपूजयेत् उत्तराख्यंचतुर्भिःस्यान्मंडलंचतुरस्रकं हस्तैर्हस्तद्वयंचस्यान्मध्यमंहस्तमात्रकं

निष्ठमानहस्तंतु पूर्तयोगे प्रशस्यते बिंदुनालांछनंतत्र कुर्यान्मंत्र प्रदेशतः तस्योपरिसमंसूत्रंकृत्वापश्चिमपूर्वयोः उदक्दक्षिणयोस्तद्वत्कु
भोस्तदनंतरं बिंदुपूर्वशयोर्मध्येबिंदुमध्यंविनिक्षिपेत् तस्योपरिक्षिपेत्सूत्रंदक्षिणोत्तरदिग्गतं मध्यबिंदोःप्रतीच्याश्चमध्यंबिंदुंविनिक्षिपेत्
उदक्दक्षिणगंसूत्रंवीथीमध्येपृथक्पृथक् एवंसूत्रद्वयंचाल्पात्पूर्वपश्चिमदिग्गतं एवंषोडशसंख्येषु कोष्टकेषुकृतेषुच पूर्वपश्चिमगंसू
थीमध्येपृथक्पृथक् दक्षिणोत्तरगंप्राग्वत्क्षिपेत्सूत्रचतुष्टयं कोष्टकानांभवेदेवंचतुःषष्टिश्चमंडले अष्टानामथवीथीनांपूर्वप
नं सूत्रंविनिक्षिपेद्द्वयोर्मध्यदेशेपृथक्पृथक् कोष्टकानांसमग्राणामेवंविरचितेसति षट्पंचाशच्छतेद्वेचसंख्याप्रोक्तात्रमं
त्प्रांतवर्तिन्यांकोष्टकानांचतुष्टयं मध्यंतद्वद्द्वितीयस्यांमध्यस्थंकोष्टकद्वयं एषामंतररेखासुरंजितोन्मार्जितास्तच स्थानं
नंतद्भवेद्द्वारसंज्ञकं एकमेवयदाद्वारपार्श्वयोःकोष्टकंभवेत् प्रांतवीथ्यांद्वितीयस्यांवीथ्यांपूर्वव्यवस्थितं त्रयंत्रयंतुकोष्ठानामे
ध्यतः उन्मार्जितास्तथतत्स्थानंद्वारशोभाह्वयंतुतत् द्वारशोभासमीपस्थंप्रांतवीथ्याव्यवस्थितं कोष्ठत्रितयकंवीथ्यांद्वितीयर
एवंसंतश्चतुर्थेषुरेखासून्मार्जितासुच स्थानंव्यवस्थितंयस्मादुपशोभाह्वयंतुतत् एवमन्यासुदिक्षुस्याद्द्वारादीनांप्रकल्पना
बद्धंस्यात्पार्श्वस्थमुपशोभना तत्रमध्येनिविष्टासुरेखासून्मार्जनेकृते स्थानंयन्मंडलेतत्तु भवेत्कोणसमाह्वयं एवंद्वाराणिचत्वारि
...शोभाष्टकंतद्वत्तथाकोणचतुष्टयं तृतीयस्याश्चतुर्थ्याश्चवीथ्यारेखाकदंबके उन्मार्जितेमध्यगतेभवेद्वीथ्यार

...ध्ये ... श्वमध्येकोष्टचतुष्टयं तत्रमध्यस्थरेखानांसर्वतोत्तुंसनेक्कते तत्स्थानमेकतांप्राप्तंपीठपद्माव्हयंतुतत् पार्श्वस्थ
द्यायाःकोणस्थंकोष्टकद्वयं प्राग्वत्तमेकतांनीतेपीठस्यचरणंतुतत् वीथ्याःषष्ठ्यास्तुसप्तम्या अष्टम्यामध्यवर्तिनी रेखांत्यस्कोपरे
खवदुत्तुंसनेक्कते बृहत्कोष्टचतुष्कंस्यान्मंडलाभ्यंतरस्थितं ईशानकोणादारभ्ययावत्कोणस्तुनैर्ऋतः सूत्रंकोष्ठयुगस्यैकंमध्यबिंदे
आग्नेयकोणाद्वायव्यकोणावधितथैवच अन्यत्रकोष्ठयुग्मेपिसूत्रमन्यद्विनिक्षिपेत् मध्यतःपीठपद्मायत्सूत्रंबिंद्वबधिस्थितं
त्रपिचतुरस्त्रस्यभागान्प्रकल्पयेत् तेषुभागश्चतुर्थोयोमध्यबिंदुसमीपगः तस्यार्धेवर्तुलाकारंक्षिपेत्सूत्रंसमंततः तन्मध्येकर्णि
मज्ञंतद्वद्वितीयके भागेतुवर्तुलाकारंसूत्रंप्राग्वद्विनिक्षिपेत् तन्मध्येकेसराणिस्युःकेसरेभ्योबहिःस्थिते भागेतृतीयकेप्राग्व द्वृ
क्षिपेत् तन्मध्येष्टौदलानिस्युस्तेभ्योबाह्येचतुर्थके भागेन्यद्वर्तुलाकारंक्षिपेत्सूत्रंसमंततः अष्टसंख्यानिसूत्रस्य दलाग्राणित
कंमंडलंप्रोक्तंसर्वतोभद्रसंज्ञकं एतस्मादिक्षुसर्वासुबहिर्वीथीप्रमाणतः सूत्रत्रयंसत्वरजस्तमःसंज्ञंविनिक्षिपेत् पंचवर्णेनचूर्ण
पूरयेत्ततः हरिद्रारचितंचूर्णंकर्णिकायांविनिक्षिपेत् धातुवर्णंकेसरेषुव्रीहितंडुलसंभवं दलेषुनिक्षिपेदेततेभ्योबाह्यप्रदेशतः शम्भ
ताचूर्णंव्योमरेखांतरेक्षिपेत् पीठपद्माबहिर्वीथ्यांनिशाचूर्णंविनिक्षिपेत् द्वारेषुश्वेतवर्णंचद्वारशोभासुलोहितं हरिद्राप्रुपशोभासुतद्वत्तंडु
भवं कोणेषुनिक्षिपेच्चूर्णंमंडलस्यबहिःपुनः श्वेतंतुसत्ववीथ्याख्येरजःसंज्ञेचलोहितं कृष्णंतमोभिधानेचक्रमाच्चूर्णंविनिक्षिपेत् इदंसर्व

भद्रं चक्रारविंदंवक्ष्यामिपुंडरीकाक्षवल्लभं चतुरस्रंपुराप्रोक्तंक्षेत्रमानप्रमान्वितं कृत्वातद्धस्तमात्रंतुदद्यात्तत्रभ्रमान्बुधः एकादशप्रमाण
ननाम्नाचैवब्रवीमितान् अंगुलानांचतुष्केणप्रथमोत्रभ्रमःस्मृतः नाभिक्षेत्रभ्रमश्चात्रद्वितीयस्त्वंगुलेनतु ततोर्धांगुलमानेनकार्यंभ्रमत्र
ष्टयं आराश्चतद्दूर्ध्वंस्यान्नाभ्यामेकांगुलेभ्रमः शोभाक्षेत्रंतदूर्ध्वंस्यात्तदूर्ध्वंस्याङ्कमद्वयं क्षेत्रस्यहस्तमात्रस्थंचैतन्मानंप्रकीर्तितं अ
दिशाकार्यंद्विगुणांत्रिगुणस्यतु ततश्चाराःप्रकर्तव्यालक्षणंतुस्फुवच्म्यहं यावत्योराःप्रकर्तव्यास्तावद्भागांस्तुभाजयेत् क्षेत्रंततस्
त्येकंभाजयेद्बुधः उर्ध्वाधोभागषट्केनचतुर्विंशतिकोष्ठकाः भवंतितेतरामूलंचतुर्भिःकारयेद्बुधः चत्वारोमध्यतःस्थाप्याः
ततः भवंतितेतरामूलंचतुर्भिःकारयेद्बुधः चतुष्टयंकोष्ठकानांमध्याच्चैवतथाभ्रमः उभयोःपार्श्वयोःकृत्वातद्भमाभ्यांपुनर्भ्र
कारयेत्प्राज्ञोभ्रमयोरर्धचंद्रवत् एवंतुशेषलोपेनप्रकटाराप्रदृश्यते तथैकातद्दन्यास्तुकर्तव्यासाधकोत्तमैः अर्धारांवायदा
भ्रमंभवेत् मध्येनभागेचारायाभागभक्केक्रमात्पुनः सूत्रंदद्यादर्धसूत्रंनिलीनप्रकटंततः अर्धारादृश्यतेतत्रशोभाक्षेत्रंतथाधि
प्रकल्पयेत्प्राज्ञोयथाशोभायुताभवेत् नलिनीवद्दमत्स्यंवाभृंगारान्वाप्रकल्पयेत् द्वारेक्षेत्रद्वयंचात्र त्वारामानेनभाजयेत् कोष्ठका
णंतत्रद्वारंप्रकल्पयेत् द्वाराद्वारांतरंयच्चवीथिकास्ताःप्रकल्पयेत् यावत्योराभवंत्यत्रतथाद्वारप्रकल्पना अक्षक्षेत्रेतुकर्तव्यंपद्मप
नाभिः ...कर्तव्यारक्तासर्वास्वराःस्मृताः नेमीपीतातथनीलाचरेखाःसर्वाःसितास्तथा रेखाचतुष्टयंकार्यंचतुर्वर्णविभागतः

...भद्रिः ...मद्र्धवत्स्मृताः एवंद्विन्निचतुःपंचगुणमानेनकल्पयेत् चतुश्चक्रंपंचचक्रमष्टचक्रंतुकारयेत् अनयैवदिशाभूमेः...
रिमाणतः इतिचक्रारविंदं चतुर्विंशतिधाक्षेत्रंकृत्वाष्टाभिःसरोरुहं मध्यकोष्ठेषुलिंगानित्वष्टाष्टाभिःप्रकल्पयेत् तत्राष्टाभिर्वरंपद्मं...
चतुष्टयं षड्भिरुत्तरपद्मंच वेदीखुरवदाचरेत् लिंगोत्सेधस्त्रिभिःकोष्ठैर्विस्तारंद्विपदेनच पद्मस्याभिमुखंलिंगं विदध्यान्नपराङ्मुखं
स्वस्तिकानेवमष्टाभिस्तुयथातथा ईशानकोणादारभ्यपंक्तिंत्यक्त्वातुदक्षिणां सपंक्त्यावेवमूर्द्ध्वायात्पदकानित्रयोदश तदग्रेचक्रमेदन्त...
...द्वयं तदग्रात्पुनरेवंचस्वपंक्त्यभिमुखंयथा तथाग्निकोणादारभ्यविहायापरपंक्तिकं नैर्ऋतात्तुतथारभ्यविहारोत्तरपंक्तिकां वाय...
...त्यक्त्वावैपूर्वपंक्तिकां शेषंपूर्वमितिज्ञेयमितिस्वस्तिकलक्षणं इतिसम्यग्विहायाथरजसैवंप्रपूरयेत् लिंगपीठंचशुक्लेनकंठस्योभ...
...पुष्पदंततोधामात्कृरक्तेनमनोहरं पंचपंचातिरक्तेनलिंगस्योभयपार्श्वतः चत्वारस्तुबहिःपीतनीलरक्तसितेनच पूरयित्वेतिलिंगानि...
पूरयेत् ईशादिवायुपर्यंतंक्रमात्कोणचतुष्टयं सितरक्तपीतकृष्णैः पार्श्वोदरनिभंत्रयं लिंगस्वस्तिकसंयुक्तंलिंगस्वस्तिकमंडलं सर्वका...
दाचार्याःसंप्रचक्षते केवलैःस्वस्तिकैश्चैवस्वस्तिकंपरिगीयते इतिलिंगस्वस्तिकं चतुरस्त्रीकृतेक्षेत्रेविंशद्भागेसमंततः मध्यषड्भागिकंपद्म...
...द्भागिकंततः भागेनवीथिकातुस्यात्पीठंपद्मंचपूर्ववत् तद्बहिर्वीथिकावप्रोभागिकोद्वारमुक्तवत् नवनाभमिदंप्रोक्तंमंडलंनवपंकजं पद्मस्था...
...थवाकुर्यात्तन्मात्रस्थितिकान्नव दिक्षुमध्येथवाब्जानांयद्वामध्येविदिक्षुच पद्मस्वस्तिकमित्येवंमंडलंसर्वकामदं चतुर्भिर्मध्यमैःकोष्ठैरसव...

भ्रामयेद्भुजां नद्यावर्तवदापीठंकर्णांतंस्वस्तिकंभवेत् विचित्रेणैवकर्णेनलोकपालाभिधेनवा स्वस्तिकान्रजसाचैवपूरयेच्छेषमुक्तवत् इतिपद्मस्वस्ति
कं अथकरणप्रकारस्त्वैविक्रम्यामेव चतुरस्रंक्षेत्रंचतुर्दिक्षुविंशत्याभागैर्विभज्यकोष्टशतचतुष्टययुतंनिष्पाद्यसमंताद्बाह्यपंक्तौवीथींविधाय तद
तरंपंक्तिचतुष्टये प्रतिपंक्तिकोष्टद्वयंमध्येपरिलोप्यचतुर्दिक्षुद्वाराणिकुर्यात् तद्द्वारानुगतानितत्पार्श्वयोरष्टौलिंगानिविदध्यात् तद्यथा बाह्यवीथ्
द्वारसंबंधकोष्ठत्रयेणपीठंतदुपरितनकोष्टकत्रयेण दक्षिणोत्तरकोष्ठद्वयस्यबाह्यतः एकैकरेखालोपनान्मध्यकोष्ठेनैकेनकंठंतदुपरिचकोष्ठ
दंतदुपरिकंठंलिंगंएवंसर्वाण्यपिलिंगानिविधायकोणेषुकर्णकोष्ठांश्चतुरोलतार्थंसंलक्ष्यकृतालिंगांतरालेशेषरेखाविलोप्यतदुपरितत्के
षुवीथीपीठपद्मानिसर्वतोभद्रवत्कुर्यात् इतिलतालिंगोद्भवं सप्तधाविभज्यैकोनपंचाशत्कोष्टकंसंपाद्यबहिर्विभागेनचतुर्विंश
मंताद्वीथीनिष्पाद्यउर्वरितपंचविंशतिकोष्टकेषुपूर्वादिदिक्षुकोष्टकाष्टकंनवपंचमध्येसंस्थाप्यशेषषोडशकोष्ठलोपेनवीथिकाचतुष्टया
असक्तानिकृत्वावीथ्यनुगान्यष्टद्वाराणिचकुर्यादसंसक्तंनवनाभद्वयं चतुरस्रमष्टधाविभज्यचतुःषष्टिपदंकृत्वामध्यकोष्ठचतुष्टयेप
पाद्यतदनंतरंपंक्तौपद्मार्धेनवीथीतदनंतरंपंक्तौचतुर्दिक्षुपद्मसमानिचत्वारिद्वाराणिद्वारकोष्टकमानेन कंठोपकंठकपोलान्कुर्यात्
ज्यब्रह्मस्थानात्सूत्रभ्रमेण अंगुलानिचत्वारिवृत्तानिकृत्वादिक्षुविदिक्षु तत्संधिषुसंध्यंतरेषुचद्वात्रिंशत्सूत्राणिदत्वातृतीय वृत्तेसंध्यं
[illegible] शार्धचंद्रान्कृत्वादिक्षुविदिक्ष्वर्धचंद्रद्वयंमध्येचतुर्थवृत्तेदलाग्राणि तृतीयवृत्तेदलसंधीन् द्वितीयवृत्तेकेसराग्राणि प्र

[illegible]सन्निजकांतन्मध्येनीलवर्णानिचबीजानिवीथीमूलमध्याग्रेषुशुक्लरक्तपीतकेसरजालदलानिच प्रतिवारणयासहशुक्लवर्ण

र्णनिष्पादयेत् तत्राभ्युन्नतदलाग्रंमुक्तिकामस्यवीक्ष्याग्रंदिक्पालानांवागोकर्णाग्रंगणानांमंडलाग्रं अश्वत्थदलपत्रकंगौरीसरस्वत्यादीन्

तत्रशालिपिष्टेनश्वेतंहरिद्र्यापीतंसिंदूरधात्वादिनारक्तंदग्धयवादिनाकृष्णंशमीपत्रादिनानीलंतद्वर्णकार्थविशेषकामोमुक्ताविद्रुमा

देवरजः कुर्यात् इति कोटिहोमेतुकुंडविशेषः पश्चिमदक्षिणयोर्योनिद्वयंकार्यं योनिवक्त्रद्वयोपेतंतदप्याहुस्त्रिमेखलमितिमात्स्यात्

नीनिर्वक्त्रंचेतिद्वयमाहुः अग्निस्थापनंचयजमानशाखयायः स्वशाखांपरित्यज्यपरशाखांसमाश्रयेत् अप्रमाणमृषिंकृत्वासोऽं

प्रतीतिपराशरोक्तेः सांगकर्मविधेर्यजमानंप्रतिप्रवृत्तेश्च स्वाध्यायोध्येतव्यइत्यध्ययनविधिनाऽनुष्ठानोपयुक्तज्ञानजनकत

स्य दृष्टार्थत्वबोधनाच्चनानुवेदानधीत्यवेदोवेत्यादिनाशाखांतरस्याप्यध्ययनंबोधितंतदपिचपूर्ववत् दृष्टार्थमेव अतोनस्वपरशा

शेषः अतएवशाखांतराधिकरणोपपादितः सर्वशाखीयांगोपसंहारोपिसंगच्छते अन्यथाशाखांतरविहितपदार्थज्ञानाभावात्तद

संगतः स्यादितिचेत् नएवंवेदांतरं यच्छाखांतरस्थपदार्थज्ञानेनतदनुष्ठानसंभवेपिनस्ववेदीयशाखांतरस्थंपदार्थानुष्ठानंसंभवतिर

योध्येतव्यइत्यत्रस्वाध्यायस्योपादेयत्वेनविवक्षितैकसंख्यत्वादिक्रमापातैकवेदस्थाया एकस्याएवशाखाया अध्ययनस्यविधानात् तद

भट्टपादाः अत्रस्वाध्यायशब्देनस्वशाखैवगृह्यतइति वेदानधीत्येतिस्मृत्यांतुवेदांतरस्थानामनेकासामपिशाखानामध्ययनंविधीयतइ

केचित् परंतु वेदांतरस्य प्रतिशाखं पर्याप्तत्वाद्वेदांतरस्याध्येकैवशाखाध्येतव्येत्याहुः अन्येतु स्वाध्यायपदेनस्वपित्रादिपरिगृहीतनानावेद
तैकैकेवशाखागृह्यतेतथाचवेदमेववेदानधीत्येतिस्मृतेर्मूलमितिलाघवमित्यस्तुविप्रतिपत्तिः सर्वथास्वाध्यायोध्येतव्यइत्येतद्विधिविहि
ध्ययनजन्यज्ञानलाभेनसंभवतिक्रतुविधिचारितार्थ्येऽविहितैच्छिकपाठजन्यज्ञानस्यकर्मण्यनुपयोगः अन्यथाशूद्रस्यापितादृशज्ञा
भवेनकर्माधिकारःस्यात् एतेनस्त्रीशूद्रौनाधीयेतामितितयोरध्ययनस्यनिषेधात्तज्जन्यज्ञानाभावेनक्रत्वधिकारइतिवदंतः प
मिश्राः परास्ताः तथाहियथात्तेपर्यासिदध्यानयतिसावैश्वदेव्यामिक्षेतिसर्वनाम्नातच्छब्देनतापविशिष्टमेवपयः प्रतिनिर्दि
[illegible]मेवर्षेब्राह्मणमुपनयीततमध्यापयीतेत्यत्रापितच्छब्देननपुंस्त्वाष्टवर्षत्वादिविशिष्टउपनीतएवपरामृश्यतेविनियुज्यतेन
[illegible]त्रैवर्णिकवच्छूद्रस्योपनयनंविहितं नचाष्टवर्षत्वादिवद्ब्राह्मणत्वस्यापिपूर्ववाक्येश्रवणाद्ब्राह्मणस्यैवाध्ययनेधिकारःस्या
विशेषोरितिवाच्यं इत्यध्ययनदानानिवैश्यस्यक्षत्रियस्यचेतिस्मृत्यातयोः प्राप्तेः स्मृतेस्तुमूलब्राह्मणपदाविवक्षयालाघवादि
श्रुत्यंतरंचेत्यन्यदेतत् सर्वथात्रैवर्णिकानामेववेदाध्ययनजन्यज्ञानेनाधिकारोनशूद्रस्याध्ययनविधेरभावात् निषेधस्तुन्याय
स्तुप्रसवानुप्रसक्तं स्ववेदीयस्वशाखांतरस्यपदार्थस्यानुष्ठानंतुवैधज्ञानाभावान्नभवति अतएववाजसनेयितैत्तिरीयादीनामष्टा
ने[illegible]तरस्थानामपिकानांग्रहयोगाभ्यासानामदृष्टार्थानांचांगानामनुष्ठानाभावःसंगच्छते अन्यथाप्रधानभावेनाति

...सिद्धिःस्यात् स्ववेदी... ...ांतरस्थस्यतुस्वशाखाविरुद्धस्यापिसूत्राद्युपात्तस्यभवति सूत्राध्ययनस्यस्वा...
...धत्वात् स्वशाखीयपदार्थानुष्ठानाशक्तौतुतद्विधिविरुद्धस्याप्यनुद्धरणादिप्रायश्चित्तचातुर्मास्यप्रयोगगतपंचाह्निकेका...
अनेनैवाभिप्रायेणाकरणाच्छाखांतरस्थस्यापिश्रेष्ठत्वमाहुर्देवयाज्ञिकाः सूत्राध्ययनस्यवैधत्वादेवचर्ग्वेदाद्येकशाख...
...तनानांसकलशिष्टानामाधानदर्शपूर्णमास ज्योतिष्टोमादिकर्माधिकारोनिर्वहणीयः अन्यथावैधज्ञानाभावेनसकृदुर्धरः...
...त्राणांतुसूत्रप्रतीकोपात्तत्वात् तदध्ययनेनैवाध्ययनसिद्धिः अधीतायांवेदांतरशाखायांसूत्रेवायस्त्वशाखाविरुद्ध...
...ज्ञानाविशेषेणानुष्ठेयत्वेनप्रसक्तमपिस्मृत्यानिषिध्यते यथा यःस्वशाखांपरित्यज्यपरशाखांसमाश्रयेत् अप्रमा...
...निमज्जतीति एतेनस्वपरशाखास्थानांसूत्रोपनिबद्धानामंगानांतुल्योविकल्पइतिश्रीमदनंतयाज्ञिकोक्तिः परास्ताशा...
...सर्वांगोपिसंहारस्तुवेदांतरीयशाखांतरस्थांगविषयः सूत्रोपात्तस्ववेदीयशाखांतरस्थाविरुद्धांगविषयश्चेतिदिक् वि...
...यां नक्षत्रेयत्रभानुःस्यात्तदाद्यंतच्चिकंत्रिके सूर्यज्ञशुक्रसौरीणामिंदुभौमबृहस्पतेः राहोःकेतोश्चनिर्दिष्टंवदनादौशुभा...
...र्याद्धवनमित्याहुर्भार्गवादयइति इदंचकाम्यविषयं संस्कारेषुविचारोस्यनकार्योनापिवैष्णवे नित्येनैमित्तिकेकार्योनचाब्दे...
...मृतइतितत्रैवोक्तेः दैवाद्धोमकरणेशांतिविष्णुधर्मोत्तरे क्रूरग्रहमुखेचैवसंजातेहवनेशुभे शांतिंविधायगांदद्याद्ब्राह्मणायकुटुं...

ायसींप्रतिमांकृत्वानिक्षिपेत्तामधोमुखीं गोमूत्रमधुगंधाद्यैरर्चितांप्रतिमांततः श्वभ्रेनिधायसंपूज्यतत्रहोमोविधीयतइति अ
र्कैश्चिदुक्तं अर्कश्चंद्राद्दष्टमेज्ञाच्चतुर्थेमंदः शुक्राद्दष्टमेंगारकश्च राहुर्धर्मेजीवतः खेटसुस्थेहोमेनाशः पुत्रदाराधनानामिति तिथि
कावेदभक्तावशेषकान् निवासोग्नेर्व्योम्निरूपेवित्तप्राणविनाशदः पातालेद्विकशेषेणधनसंचयनाशनं गुणवेदावशे
रव्ययइति आब्दिकेयुगादिनिमित्तहोमे जपाद्यंगहोमेपिनदिनंशोध्यं तस्यस्वतंत्रकालत्वाभावात् अग्निश्चलौकिव
ोत्सर्वाधानींतुलौकिके स्मार्तेचलौकिकेकार्यश्रौतंवैतानिकाग्निष्विति स्मृत्यर्थसारात् कातीयानांतुस्मार्तोपितत्सूत्रेत
आहूयचैवहोतव्यंयत्रयोविहितोनलः तथा शुभंपात्रंतुकांस्यंस्यात्तेनाग्निंप्रणयेद्बुधः तस्याभावेशरावेणनवेन
हहोमेचवन्हिःस्यात्कोटिहोमेहुताशनः पूर्णाहुत्यापिलोनामशांतिकेवरदःस्मृतः देवीपुराणे शुभग्रहविधोह्यग्निर्ल
कोटिहोमेशिवोवन्हिःसर्वकामप्रदायकः ततोवेद्यांग्रहस्थापनं अग्निप्रणयनंकृत्वाततस्त्वावाहयेत्क्रशानितिप्रात्स्यात्
लेखेदष्टदलंपद्मंवेदिकोपरितंदुलैः तथा यथारुचिप्रमाणेनप्रतिमाःकल्पयेत्सुधीः ग्रहपूजनेचप्रात्स्यादावादित्यक्रमः वं
भौमशुक्रसोमबुधगुरुमंदादिक्रमउक्तः आवाहनंचव्याहृतिमंत्रेण आवाहनंव्याहृतिभिस्तथैवाश्विकुमारकाविति प्रा
...तितिस्कंदाच्चेतिहेमा[illegible]दनरत्नेतु आवाहनस्थापनंभिन्नं अतोव्याहृतिभिरावाह्यतत्तन्मंत्रेणस्थापनंक

[illegible]तु प्रणवंत्यादितः कृत्वा भूर्भुवस्वस्ततःपरं चतुर्थ्यानामसंयुक्तं नमस्कारांतयोजितं एषमंत्रः समाख्यातो ग्रहपूज

कः अनेनावाहनं कुर्यादनेनैव विसर्जयेदिति वामनवचनाद्ग्रहगायत्र्या पूजनमुक्तं बौधायनेत्वावाहनवाक्ये विशेषउक्तः किरीटिनं पद्मा

रं पद्मगर्भसमद्युतिं सप्ताश्वं सप्तरज्जुं कलिंगदेशजं काश्यपगोत्रजं विश्वामित्रर्षिं त्रिष्टुप्छंदसं रक्तांबरधरं रक्ताभरणभूषितं रक्तगंध

क्तध्वजपताकिनं मुकुटकेयूरशोभितमारुह्यरथं दिव्यं मेरुं प्रदक्षिणी कुर्वाणं ग्रहमंडले प्रविष्टमधिदेवताग्निसहितं प्रत्यधिदेवते

क्तवृत्तमंडले पूर्वाभिमुखमादित्यमावाहयामि किरीटिनं रक्तमाल्यांबरधरं शक्तिशूलगदाधरं चतुर्भुजं मेषगमनमवंतिदेशजं

जामदग्न्यर्षिं जगतीच्छंदसं रक्तांबरधरं रक्ताभरणभूषितं रक्तगंधानुलेपनं रक्तच्छत्रध्वजपताकिनं मुकुटकेयूरमणिशोभि

थं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेवताभूमिसहितं प्रत्यधिदेवतास्कंदसहितं त्रिकोणरक्तमंडले दक्षिणाभि

मावाहयामि किरीटिनं श्वेतवर्णं चतुर्भुजं दंडिनं वरदमक्षसूत्रकमंडलुं भोजकटदेशजं भार्गवगोत्रजं शौनकर्षिं पंक्तिच्छंदसं श्वेता

ताभरणभूषितं श्वेतगंधानुलेपनं श्वेतच्छत्रध्वजपताकिनं मुकुटकेयूरशोभितमारुह्यरथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमि

द्राणीसहितं प्रत्यधिदेवतेंद्रसहितं शुक्लपंचकोणमंडले प्राङ्मुखं शुक्रमावाहयामि किरीटिनं श्वेतवर्णं गदापाणिं द्विभुजमाग्नेयभागमत्रिगो

मात्रेयर्षिमनुष्टुप् छंदसं श्वेतांबरधरं श्वेताभरणभूषितं श्वेतं श्वेतगंधानुलेपनं श्वेतध्वजपताकिनं मुकुटकेयूरशोभितमारुह्यरथं दिव्यं मेरुं

प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टं अधिदेवतांबुसहितं प्रत्यधिदेवतोमासहितं चतुरस्त्रमंडले प्रत्यङ्मुखं सोममावाहयामि किरीटिनं पीतमाल्या
रधरं पीतवर्णं खड्ग गदाचर्मपाणि भूषित सिंहस्थं वरदं मगधदेशजमत्रिगोत्रजं भरद्वाजर्षिबृहतीच्छंदसं पीतांबरधरं पीताभरण भूषितं पी
गंधानुलेपनं पीतच्छत्र ध्वजरथपताकिनं केयूरशोभितमारुह्यरथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले उत्तराभिमुखं सौम्यमावाहयामि
रीटिनं पीतांबरवर्णं चतुर्भुजं दंडिनं वरदं साक्षसूत्रकमंडलुं सिंधुदेशजमांगिरसगोत्रजं वसिष्ठर्षिमनुष्टुप्छंदसं पीतांबरधरं पीतम
नं पीतच्छत्र ध्वजरथपताकिनं मुकुटकेयूरशोभितमारुह्यरथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेवतेंद्रसहितं
ह्मसहितं पीतदीर्घचतुरस्त्रमंडले उदङ्मुखं बृहस्पतिमावाहयामि किरीटिनमिंद्रनीलसमद्युतिं शूलधरं वरदं गृध्रवाहनं सौराष्ट्रदेशजं क
गृग्वर्षि गायत्रीच्छंदसं कृष्णांबरधरं कृष्णाभरणभूषितं कृष्णगंधानुलेपनं कृष्णच्छत्र ध्वजपताकिनं मुकुटकेयूरमणिशोभितम
व्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेवताप्रजापतिप्रत्यधिदेवतायमसहितं धनुर्मंडले प्रत्यङ्मुखं शनैश्चरमावाहयामि
नं करालवदनं खड्गचर्मशूलगदाधरं सिंहासनस्थं पूर्वदेशजं पैठीनसगोत्रजमांगिरसर्षिमनुष्छंदसं कृष्णांबरधरं कृष्णाभरणभूषितं
नुलेपनं कृष्णच्छत्र ध्वजरथपताकिनं मुकुटकेयूरमणिशोभितमारुह्यरथं दिव्यं मेरुं प्रदक्षिणीकुर्वाणं ग्रहमंडले प्रविष्टमधिदेवतासर्पस
... [illegible] ...तं कृष्णशूर्पमंडले दक्षिणाभिमुखं राहुमावाहयामि धूम्रान् द्विबाहून् गदाधरान् विकृताननान् गृध्रवाहनान्नादिनोम

...कान्नानाछंदसान् चित्रांबरधरान् चित्राभरणभूषितान् चित्रगंधानुलेपनान् कृष्णध्वजरथपताकिनो मुकुटकेयू
मतानारुह्यरथंमेरुंप्रदक्षिणीकुर्वाणान् ग्रहमंडलेप्रविष्टानधिदेवताब्रह्मसहितान् मत्यधिदेवताचित्रगुप्तसहितान् कृष्णपिंगलध्वजान्
दक्षिणाभिमुखान् केतून् आवाहयामि मात्स्याद्युक्तावाहनप्रकारस्तु प्रयोगोदर्शयिष्यते तत्रसोमादय आदित्याभिमुखा एवस्थाप्या नात्म
लक्षहोमेचगरुडस्थापनवेदीपूर्वस्यामितिमदनरत्ने उत्पलपरिमले ग्रहस्यदक्षिणेपार्श्वेस्थापयेदधिदेवतां ग्रहस्योत्तरपार्श्वेतुन्य
देवतां वसिष्ठसंहितायां शनैःपश्चिमतःस्थाप्यविनायकमथार्चयेत् तस्यदक्षिणतोदुर्गांजातवेदस इत्यृचा वायुंचदक्षिणेकोणे
येत् दक्षिणेतस्यचाकाशमादित्यस्तस्यचार्चयेत् अश्विनौदक्षिणेतस्यकार्यौवेषोउषाकृत्वा उत्पलपरिमले ततोविनायकंदुर्गां
चनौ आतूनइंद्रइत्याद्यैर्मंत्रैःप्रागीरितैर्यजेत् प्रयोगपारिजाते पद्मप्राग्दलमारभ्यदलाग्रेषुक्रमान्न्यसेत् इंद्रादिलोकपालांश्च
प्रपूजयेत् वसिष्ठसंहितायामर्पांद्रादिपूजोक्ता लोकपालक्षेत्रपालादीनांचावाहनमनित्यं द्वात्रिंशदितिमात्स्योक्तेः केवलग्रहमरवे
देवतादीनामप्यनित्यं याज्ञवल्क्यादिभिरनुक्तेः कोटिहोमेतुदेवताः विशेषोभविष्ये ब्रह्माणंपूर्वभागेतुमध्येदेवंजनार्दनम् पश्चि
थारुद्रंसूनुमुत्तरतस्तथा सूनुंस्कंदम् ततोग्रहानुक्तोपचारैःपूजयेत् वसिष्ठः उपचाराणिसर्वेषामपिशक्त्याक्षतैःसदा गंधाभावेशक्तुगं
पुष्पाभावेस्कगंधकम् धूपाभावेगुग्गुलःस्याद्द्रव्याभावेतुमिश्रकम् पंचामृतंगवामेवमिश्रकंनकदाचन ततःकलशस्थापनम् तत्रविशेषोवा

षे पंचत्वक्पल्लवोपेतंशतौषधिसमन्वितम् एषामभावेतुदशासर्वौषध्यः प्रकीर्तिताः तत आज्यभागांतेहोमः मार्कंडेयः संपूजयेत्ततो वा
दद्याच्चैवाहुतीः क्रमात् पृथ्वीचंद्रोदयेदेवीनंदिपुराणयोः होमेभोजनकालेच संध्ययोरुभयोरपि आचांतः पुनराचामेदन्यत्रतुसकृत्सकृ
त् हेमाद्रौदेवीपुराणे गणाधिपतयेदद्यात्प्रथमातुवराहुतिः अन्यथाविफलंकर्मभवतीहनसंशयः भविष्ये प्रणवादिभिश्चतल्लिंगै
र्हाकारांतयोजितैः जुहुयात्सर्वदेवानांवेद्याचैवोपकल्पितान् अनेककर्तृकेहोमेप्रत्याहुतित्यागस्यकर्तुमशक्यत्वात्सर्वदेवताउद्दि
णिनिर्दिश्यसकृत्त्यागः कार्यइतिहेमाद्रिः पारिजातेआश्वलायनः जुहुयात्समिदन्नाज्यैराभिर्ऋग्भिर्यथाक्रमम् तत्रैवस्क
सहस्रंतुशतमष्टाधिकंतथा अष्टाविंशतिमष्टौवा एकैकस्यतुहोमयेत् वसिष्ठः आदौतुसमिदन्नाज्यैः पृथगष्टोत्तरंशतम् इ
वधेपिग्रहमखेप्रधानदेवानांविशेषपरत्वंप्रमाणाभावात् चरौत्वेकाहुतिपक्षोपिमात्स्ययाज्ञवल्क्याभ्यामुभयत्रोक्तेः मात्स्ये
घृताद्यन्नचरुभक्ष्यादिकंततः चरुशब्देनगुडौदनादिरुच्यते तथाचपारिजातेआश्वलायनः गुडौदनंपायसान्नंक्षीरंसंयावषा
दनंघृतान्नंचकृसरंचसचित्रकम् इत्येतानिहवींषिस्युः समित्संख्यासमाहुतीः भक्ष्यपदेनद्राक्षादिगृह्यते अधिदेवतादिहोमोप्युक्त
चरुणाचसमिद्भिश्चसर्पिषाचतिलैः क्रमात् तत्तन्मंत्रैश्चहोतव्याः क्रमात्तदधिदेवताः अत्रसंख्यापारिजातेगृह्यपरिशिष्टे प्रधान
[illegible] त्वेन द्विनाश्चैवाधिदेवत्याः पंचानांचैवपंचधाः द्विनाः द्वे तिस्रोवेत्यर्थः पंचानांगणेशादीनांपंचधाएकैकेत्यर्थः

...ादिहोमः पारिजाते इंद्रादिलोकपालांश्च तत्तन्मंत्रैः प्रपूजयेत् तत्तन्मंत्रैर्जपं कुर्यात्ततो होमं समाचरेत् स...
...मात्स्ये होतव्यां मधुसर्पिर्भ्यां दध्ना चैव समन्विताः वासिष्ठे तु हुनेदाज्याक्तसमिध इत्युक्तं ततोऽयुतादिहोमः वासिष्ठे ततो व्याहृति...
...त्तिलहोमं प्रयत्नतः प्रथमोऽयुतहोमः स्याल्लक्षहोमो द्वितीयकः तृतीयः कोटिहोमः स्यात्त्रिविधो ग्रहयज्ञकः एकरात्रं त्रिरात्रं वा पंचरा...
वा शिवगाथां विष्णुगाथां शांतिं ब्राह्मणभोजनं समापयेत्प्रतिदिनमेवं भक्त्या समन्वितः स्वेच्छया यज्ञ उच्यत इति भविष्योत्त...
नियमो समिदादिहोमव्यतिरेकेणायुतादिसंख्यापूरणीयेति हेमाद्रिः नृसिंहपुराणे ततो व्याहृतिभिः पश्चाज्जुहुयात्तु तिलादि...
...तिसंख्या लक्षं वा कोटिरेव वा होमद्रव्यं च घृतव्रीहितिलान्यतमात् व्याहृतिभिरयुतादिहोमे च ग्रहदेवता ग्रहयज्ञ इत्युक्ते रितिके...
...वरणास्तु अग्निर्वायुः सूर्यः प्रजापतयो देवता इत्याहुः ॐ भूर्भुवः स्वश्चेति तिस्रो व्याहृतयो जपे आभिश्च होमे तिसृभिश्च तुर्थी...
इतिवाक्याद्व्यस्तसमस्ताभिर्होम इति प्रयोगपारिजातः मदनरत्ने तु समस्ताभिरेव व्याहृतिभिर्होमोऽग्निर्वायुः सूर्यश्च देवता इत्युक्तं अ...
मे च ऋत्विज एव कर्त्तार इति केचित् तन्न ऋत्विग्द्वयपक्षे आचार्यस्य होमकर्तृकत्वात् कोटिहोमे च विशेषो भविष्ये पूर्णपूर्णसहस्रे तु दद्या...
हुतिं शुभाम् गोभिलोऽपि नमुक्तकेशो जुहुयान्नानिपातितजानुकः उत्तानेनैव हस्तेन अंगुष्ठाग्रेण पीडितम् संहतांगुलिपाणिस्तु वाग्यतो जुहु...
यान्हविः तुलादानवद्द्वारपालजपः वसिष्ठः ततो जपादीन्जुहुयात्पूर्णाहुतिमथाचरेत् शौनकः अयाश्चेत्यादिभिर्हुत्वा समुद्रादूर्मिसूक्ततः

संततामाज्यधारांतां पूर्णाहुतिमथाचरेत् अथाश्वेतिस्वस्वशाखाम्नायश्चित्तोपलक्षणं मात्स्ये पूर्णाहुतिंच मूर्धानं दिवइत्यभिपातयेत् अ
ग्निपुराणे मूर्धानंदिवमंत्रेण संस्रवेणचधारया दद्यादुत्थायपूर्णांवैनोपविश्यकदाचन वसिष्ठसंहितायाम् मंत्रेणसप्तति अग्निइति पूर्णा
तिंहुनेत् वसोर्धारायांकुंभमूलेयवमात्रं छिद्रंकर्तव्यमित्युक्तं हेमाद्रौ अयुतहोमेनवसोर्द्धारा मात्स्ये लक्षहोमप्रकरणे एवतत्पाठात् व
संहितायाम् स्वस्तिकंकल्पयेत्पश्चात्कुंडस्येशानभागतः यजमानाभिषेकार्थं तत्रभद्रासनंन्यसेत् प्राङ्मुखस्योपविष्टस्ययजमा
अभिषेकंततः कुर्युः साचार्याः षोडशर्त्विजः विविधैर्मंगलैर्घोषैः सूतमागधजैः सह ततस्तस्याभिषिक्तस्यरक्षार्थंबलिमुष्टि
वदिक्षुविचित्रान्नैर्दीपैर्नीराजयेत्ततः शुक्लमाल्यांबरधरः शुक्लमाल्यानुलेपनः ततोमंगलमागत्यध्यायेदग्निंस्कुरान् ग्रहान्
मंत्रैश्चदद्यात्पुष्पांजलिंततः आचार्येभ्योनवभ्यश्च ग्रहार्चनफलंततः समिदाज्यचरूणांच तिलहोमफलंचयत् ब्रह्मत्वेकुंभप
नस्यफलंचयत् गणपक्षेत्रपार्केशदुर्गाहव्यांगदेवताः तासांजपफलंसम्यग्गृह्णीयाज्जलपूर्वकम् प्रयोगपारिजातेवामनः अ
तिश्चग्रहार्चनफलंततइत्युक्त्वासमिदाज्येतिश्लोकोपठितवान् सएव ततस्तेभ्योयथाशक्तिदातव्यादक्षिणाततः आचार्यार्हंजाप
चाथनष्टये आज्यंनिरीक्ष्यदत्वाच ब्राह्मणान् भोजयेत्ततः तत्रैवाश्वलायनः एकमेकाहुतौविप्रहोमेत्वन्नेन भोजयेत् अंत्याद्यो
... सहस्रस्याहुतेचैकंजघन्योऽविप्रभोजनात् तस्माद्दातुमशक्तोयोदक्षिणांचान्नमेवच जपैः प्रणामैःस्तोत्रैः

पयद्गृहान् [illegible]ष्यांत्तरे ततः समाप्तेयज्ञेतुकारयेत्सुमहोत्सवम् शंखतूर्यनिनादेनब्रह्मघोषखरेणच अथपितामहकृतोयु[illegible]
प्रयोगः कर्मसंकल्प्यगणेशपूजनंपुण्याहवाचनंमातृकापूजनंनांदीश्राद्धंचकृत्वाऽचार्यब्रह्मर्त्विग्वरणंकुर्यात् तत्रमंत्राः आचा[illegible]
स्वर्गेशक्रादीनांबृहस्पतिः तथात्वंममयज्ञेऽस्मिन्नाचार्यत्वंकुरुप्रभो यथाचतुर्मुखोब्रह्मासर्ववेदधरःप्रभुः तथात्वंममयज्ञे
भवद्विजोत्तम अस्ययागस्यनिष्पत्तौभवंतोभ्यर्चितामया सुप्रसन्नाःप्रकुर्वंतुशांतिकंविधिपूर्वकम् ततःसर्वान्मधुपर्केणा[illegible]
शुक्लांबरधरःशुक्लमाल्यानुलेपनः साचार्यर्त्विग्यजमानोमंगलघोषेणजलपूर्णकलशहस्तः ॐ भद्रंकर्णेभिः० जनित्वमितिमं[illegible]
क्षिणीकृत्य पश्चिमद्वारेणप्रविश्य यदत्रसंस्थितंभूतंस्थानमाश्रित्यसर्वदा स्थानंत्यक्त्वातुतत्सर्वंयत्रस्थंतत्रगच्छतु अपक्र[illegible]
पिशाचाःसर्वतोदिशम् सर्वेषामविरोधेनब्रह्मकर्मसमारभेत् इतिगौरसर्षपान्विकीर्य शुचीवोहव्येतिऋचेनापोहिष्ठेतितृचेन[illegible]
स्वस्त्ययनंतार्क्ष्यमितिमंत्रद्वयंजपेत् ततोमंडपपक्षेतन्नैर्ऋत्येवास्तुवेदिंकृत्वावेदीशानादिकोणचतुष्के विशंतुभूतलेनागालोकपा[illegible]
तः अस्मिन्मंडपेवतिष्ठंतुआयुर्बलकराःसदेतिमंत्रेणचतुरःशंकून्रोपयित्वा ततः आग्नेयादिशंकुपार्श्वेमाषभक्तबलीन्दद्यात् अग्नि[illegible]
व्यथसर्पेभ्योयेचान्येतत्समाश्रिताः तेभ्योबलिंप्रयच्छामिपुण्यमोदनमुत्तममिति एवंमंत्रत्रयेणनैर्ऋत्यवायव्येशान्याम् शंकुपार्श्वेमाषभ[illegible]
बलीन्दत्वा तेचमंत्राः नैर्ऋत्याधिपतिश्चैवनैर्ऋत्यांयेचराक्षसाः बलिंतेभ्यःप्रयच्छामिसर्वंगृण्हंतुमंत्रितम् ॐ नमोवायुरक्षोभ्योयेचान्ये

त्समाश्रिताः बलिंतेभ्यः॰ रुद्रेभ्यश्चैवसर्पेभ्योयेचान्येतत्समाश्रिताः बलिंतेभ्यःप्रयच्छामिगृण्हंतुसततोत्सुकाः ततोह्युपरिवस्त्रेसुवर्णादिशलाक
ॐ शांतायैनमः यशोवत्यैनमः कांतायैनमः विशालायैनमः प्राणवाहिन्यै॰ सत्यै॰ सुमनायै॰ नंदायै॰ सुभद्रायै॰ इतिपश्चादारभ्य प्र
गंताउदकूसंस्थानवरेखाःकृत्वा पुनः हिरण्यायै॰ सुव्रतायै॰ लक्ष्म्यै॰ विभूत्यै॰ विमलायै॰ विप्रायै॰ जयायै॰ कालायै॰ विशोकायै॰
दक्षिणारंभाउदगंताः प्राकूसंस्थानवरेखाःकृत्वा मध्येकोष्टचतुष्टयमेकीकृत्यकोणेषुरेखांदत्वातेनार्द्धपदानिसंपद्यंते ततस्तत्रब्र
ह्मयेत् वास्तोश्चतुरस्त्रंशरीरंदेवाअक्रम्यस्थिताइति तत्तद्देवपदेचतत्तद्देवावाहनम् तत्रमध्यपदचतुष्केहृदये ब्रह्मणेन॰ ब्रह्माणं
पूर्वपदद्वयेदक्षिणस्तने अर्यम्णेनमः अर्यमणं॰ दक्षिणपदद्वये जठरदक्षिणेविवस्वते॰ विवस्वन्तं॰ पश्चिमपदद्वये जठरवामे
उदकूपदद्वयेवामस्तने पृथ्वीधराय॰ पृथ्वीधरं॰ तत्रब्रह्मसमीपस्थाने आग्नेयपदार्धयोर्दक्षिणहस्तेसावित्रसवितारौ तत्रपूर्वा
मः सावित्रं॰ पश्चिमार्द्धे सवित्रे॰ सवितारं॰ नैर्ऋत्यपदार्द्धयोर्दृषणमेंढ्रयोर्विबुधाधिपजयौ तत्रपूर्वार्द्धे विबुधाधिपाय॰ विबुधाधिप
र्द्धे जयाय॰ जयं॰ वायव्यपदार्द्धयोर्वामहस्ते राजयक्ष्मरुद्रौ तत्रपूर्वार्द्धे राजयक्ष्मणे॰ राजयक्ष्माणं॰ पश्चिमार्द्धे रुद्राय॰ रुद्रं॰ ई
योरूरौमुखयो रापापवत्सौ तत्रपूर्वार्द्धे अद्भ्योनमः अपः आ॰ पश्चिमार्द्धे आपवत्साय॰ आपवत्सं॰ ईशानपददक्षिणार्द्धे वास्तोः
खिनेनमः शिखिनं॰ तद्दक्षिणसार्द्धपदे दक्षिणनेत्रे पर्जन्याय॰ पर्जन्यं॰ तद्दक्षिणपदद्वये दक्षिणश्रोत्रेजयंताय॰ जयंतं॰ तद्द

...युधाय॰ कुलिशायुधं॰ तद्दक्षिणपदद्वये दक्षिणबाहौ सूर्याय॰ सूर्यं॰ तद्दक्षिणपदद्वये दक्षिणबाहौ सत्याय॰
दक्षिणसार्द्धपदे दक्षिणकूर्परे भृशाय॰ भृशं॰ तद्दक्षिणाग्नेयपदार्द्धे दक्षिणप्रबाहौ आकाशाय॰ आकाशं॰ तत्पश्चिमार्द्धे दक्षि...
वायवेन॰ वायुं॰ तत्पश्चिमार्द्धपदे दक्षिणमणिबंधे पूष्णे॰ पूषणं॰ तत्पश्चिमपदद्वये दक्षिणपार्श्वे वितथाय॰ वितथं॰ तत्पश्चिमपदद्वये
...र्श्वे गृहक्षताय॰ गृहक्षतं॰ तत्पश्चिमपदद्वये दक्षिणोरौ यमाय॰ यमं॰ तत्पश्चिमपदद्वये दक्षिणजानौ गंधर्वाय॰ गंधर्वं॰ तत्पश्चि...
...क्षिणजंघायां भृंगराजाय॰ भृंगराजं॰ तत्पश्चिमनैर्ऋत्यपदार्द्धे दक्षिणस्फिचि मृगाय॰ मृगं॰ तदुत्तरार्द्धे पादयोः पितृभ्यो न॰ पि...
...र सार्द्धपदे वामस्फिचि दौवारिकाय॰ दौवारिकं॰ तदुत्तरपदद्वये वामजंघायां सुग्रीवाय॰ सुग्रीवं॰ तदुत्तरपदद्वये वामजानौ...
...ष्पदंतं॰ तदुत्तरपदद्वये वामोरौ वरुणाय॰ वरुणं॰ तदुत्तरपदद्वये वामपार्श्वे असुराय॰ असुरं॰ तदुत्तरस्यार्द्धपदे वामपार्श्वे शो...
तदुत्तरवायव्यपदार्द्धे वाममणिबंधे पापाय॰ पापं॰ तत्प्राक्पदार्द्धे वामबाहौ रोगाय॰ रोगं॰ तत्प्राक्सार्द्धपदे वामबाहौ अहये॰ अहि...
पदद्वये वामकूर्परे मुख्याय॰ मुख्यं॰ तत्प्राक्पदद्वये वामबाहौ भल्लाटाय॰ भल्लाटं॰ तत्प्राक्पदद्वये वामबाहौ सोमाय॰ सोमं॰ तत्प्राक्पदद्व...
मांसे सर्पेभ्यो॰ सर्पान् आ॰ तत्प्राक्सार्द्धपदे वामश्रोत्रे अदितये॰ अदितिं॰ तत्प्रागर्धपदे वामनेत्रे दितये॰ दितिं॰ उत्तरे वास्तोष्पते वसिष्ठो...
वास्तोष्पतिस्त्रिष्टुप् वास्तोष्पत्यावाहने विनियोगः ॐ वास्तोष्पते॰ सुवर्णमय्यां मूर्तौ वास्तोष्पतये॰ वास्तोष्पतिं आवाहयामि ततः ईशा...

नादिविदिक्षु ऐशान्येचरक्यै॰ चरकीं॰ आग्नेये विदार्यै॰ विदारींआ॰ नैर्ऋत्ये पूतनायै॰ पूतनां॰ उत्तरेपापराक्षस्यै॰ पापराक्षसीं॰ मंडलपूर्वादि
क्षु तत्रपूर्वे स्कंदाय॰ स्कंदंआ॰ दक्षिणे अर्यम्णे॰ अर्यमणं॰ पश्चिमे जृंभकाय॰ जृंभकं॰ उत्तरे पिलिपिच्छाय॰ पिलिपिच्छं॰ तदस्तुमित्रा॰
ह्वावे॰ इतिप्रतिष्ठाप्य ततः सर्वान्संपूज्य मंडलादैशानेकुंभंसंस्थाप्य मंडलाग्रे पायसबलीन्दद्यात् तद्यथा ॐ ब्रह्मणेनमः एषपायस
र्नमम एवंसर्वत्र ॐ अर्यम्णेनमः पाय॰ विवस्वते॰ मित्राय॰ पृथ्वीधराय॰ सावित्राय॰ सवित्रे॰ विबुधाधिपाय॰ जयाय॰ राज
द्राय॰ अग्नोनमः आपवत्साय॰ शिखिने॰ पर्जन्याय॰ जयंताय॰ कुलिशायुधाय॰ सूर्याय॰ सत्याय॰ भृशाय॰ आकाश
ष्णे॰ वितथाय॰ गृहक्षताय॰ यमाय॰ गंधर्वाय॰ भृंगराजाय॰ मृगाय॰ पितृभ्यो॰ दौवारिकाय॰ सुग्रीवाय॰ पुष्पदंताय॰
राय॰ शेषाय॰ पापाय॰ रोगाय॰ अहये॰ मुख्याय॰ भल्लाटाय॰ सोमाय॰ सर्पेभ्यो॰ अदितये॰ दितये॰ एषपायसब॰ ततश्च
माषभक्तबलीन्दत्वा सयथा चरक्यै॰ एषमाषभक्तब॰ एवमग्रेपि विदार्यै॰ पूतनायै॰ पापराक्षस्यै॰ स्कंदाय॰ अर्यम्णे॰ जृंभक
पिच्छाय॰ एषपायसब॰ इतिबलीन्दत्वा ततःपावमानेनराक्षोघ्नेनचसूक्तेन विसूत्र्या मंडपंवेष्टयेत् अथद्वारपूजा तत्रपूर्वद्वारे
नमः अधःदेहल्यै॰ वामदक्षिणस्तंभयोः गणेशाय॰ स्कंदाय॰ तत्रकलशद्वये गंगायै॰ यमुनायै॰ दक्षिणद्वारे ऊर्ध्वंश्रियैनमः अध
...नायनमः कपर्दिने॰ कलशद्वये गोदायै॰ कृष्णायै॰ पश्चिमद्वारे ऊर्ध्वंश्रियै॰ अधःदेहल्यै॰ स्तंभयोः नंदि

नर्मदायै॰ उत्तरद्वारे ऊर्ध्वश्रियैनमः अधः देहल्यै॰ स्तंभयोः महाकालाय॰ भृंगिणे॰ कलशद्वये वारुण्यै
तिद्वारपूजा ततस्तोरणादिपूजांकरिष्ये इति संकल्प्य तत्रपूर्वस्यांदिशिमंडपाद्बहिर्हस्तमात्रे अश्वत्थंवटंवाऋद्ददंशोभननामकं
ह्नितं तोरणंन्यस्य ॐ अग्निमीळेपुरोहितं॰ ऋद्ददतोरणायनमः ऋद्ददतोरणंआवाहयामि ऋद्ददतोरणायनमः गंधंसमर्पयामि पु
पं नैवेद्यतांबूलदक्षिणांतोपचारैःपूजयेत् तत्रराहवेनमः राहुं आ॰ बृहस्पतये॰ बृहस्पतिंआ॰ राहुबृहस्पतिभ्यांगंधाद्युपचारान्
त्रैकः कलशः स्थाप्यः तत्रमंत्राः महीद्यौरितिभूमिंस्पृष्ट्वा तत्रओषधयःसंवदंतइतियवान् आकलशेष्विति कलशंस्थापयि
इतिजलेनापूर्य गंधद्वारामितिगंधंक्षिप्त्वा या ओषधीरितिसर्वौषधीःक्षिपेत् ओषधयःसमितियवान् कांडात्कांडादिति
इतिपंचपल्लवान् स्योनापृथिवीतिसप्तमृदः याःफलिनीरितिफलम् सहिरत्नानीतिपंचरत्नानि हिरण्यरूपइतिहिरण्यं युव
तिवस्त्रेण सूत्रेणवासुखेवेष्टयेत् पूर्णादर्वीत्युपरिधान्यपूर्णपात्रंन्यसेत् तस्मिन्कलशेध्रुवाय॰ ध्रुवं॰ ध्रुवायनमः गंधाद्युपचा
यामि ततोदक्षिणेगत्वा औदुंबरंप्लाक्षंवाऋभद्रंविकटनामकंवाचक्रचिह्नितंतोरणंन्यस्य ॐ इषेत्वोर्जेत्वा वायवस्थोपायवस्थदेवो
धिताप्रार्पयतुश्रेष्ठतमायकर्मणे ऋभद्रतोरणाय॰ ऋभद्रतोरणंआवाहयामि ऋभद्रतोरणायनमः गंधाद्युपचारान्समर्पयेत् तत्रसूर्या
नमः सूर्यंआवा॰ अंगारकायन॰ अंगारकंआ॰ सूर्यांगारकाभ्यांनमः गंधाद्युपचारान्समर्पयेत् ततैकःकलशःस्थाप्यः तस्मिन्कलशेध

येनमः धरांआ॰ धरायैनमः गंधाद्युपचारान्समर्पयेत् ततः पश्चिमेगत्वा प्लाक्षमौदुबरंवास्फकर्मस्फभीमनामकंवागदाचिन्हितंतोरणंन्य
स्य ॐ अग्न आया॰षि॰ स्फकर्मतोरणाय॰ स्फकर्मतोरणंआ॰ गंधाद्युपचारान् स॰ तत्रशुक्राय॰ शुक्रं॰ बुधाय॰ बुधं॰ शुक्रबुधाभ्यांनम
गंधाद्युपचारान्स॰ तत्रैकः कलशः स्थाप्यः तस्मिन्कलशेवाक्पतयेनमः वाक्पतिं॰ वाक्पतये॰ गंधाद्युपचारान्॰ ततउत्तरेगत्वा वटमा
वापलाशंवासुहोत्रंस्फप्रभंवापद्मचिह्नितंतोरणंन्यस्य ॐ शन्नोदेवी॰ नः सुहोत्रतोरणाय॰ स्फहोत्रतोरणंआ॰ स्फहोत्रतोरणाय
पचारान्सम॰ तत्र सोमायनमः सोमं॰ केतवेन॰ केतुं॰ शनैश्चराय॰ शनैश्चरं॰ सोमकेतुशनैश्चरेभ्योन॰ गंधाद्युप॰ तत्रैकः कल
स्मिन्कलशे विघ्नेशाय॰ विघ्नेशं आ॰ विघ्नेशाय॰ गंधाद्युपचारा॰ ततः पूर्वेगत्वा पूर्ववन्महीद्यौरित्यादिनाप्रतिद्वारशाखं कल
य प्रतिकलशंमंत्रावृत्तिः अस्मिन्कलशद्वये ऐरावतारव्यदिग्गजाय॰ ऐरावतारव्यदिग्गजं॰ ऐरावतारव्यदिग्गजाय॰ गंधाद्युपचार
ग्वेदिनावृत्विजो ऋग्वेदः पद्मपत्राक्षोगायत्र्यःसोमदैवतः अत्रिगोत्रस्तुविप्रेंद्र ऋत्विक् त्वंमेमरवे भवेति प्रत्येकंवृत्वा ॐ अग्निम
त्रेणप्रत्येकंगंधाद्युपचारैः पूजयेत् ततः सहस्राक्षंमत्तैरावतसंस्थितम् पीतकिरीटिनंकुंडलधरंदक्षिणवामकरस्थवज्रोत्पलमिंद्रं
ह्येहिसर्वामरसिद्धसाध्यैरभिष्टुतोवज्रधरामरेश संवीज्यमानोप्सरसांगणेनरक्षाध्वरंनो भगवन्नमस्ते भोइंद्रइहागच्छ इहतिष्ठ
[illegible]कंद्वारकलशेआवाहयामि ॐ आशुःशिशानो॰ मिंद्रः इतिमंत्रेणपीतांपताकांपीतध्वजंचद्वयमपिदशाह

[illegible] ॐ त्रातारमिंद्रम॰ द्रः इंद्राय॰ इंद्रंआ॰ इंद्राय॰ गंधाद्युप॰ इंद्रः सुरपतिः श्रेष्ठोवज्रहस्तोमहाबलः शतयज्ञाधिपो
नित्यंनमोनमइतिनत्वा इंद्राय सांगायसपरिवारायसायुधायसशक्ति॰ एतंमाषभक्तबलिंसमर्पयामीतिबलिंदत्वाच मेत् ततः आ
त्वातत्र पूर्ववत्कलशंसंस्थाप्य तत्र पुंडरीकाय॰ पुंडरीकंआ॰ अमृताय॰ अमृतं आ॰ पुंडरीकामृताभ्यां॰ गंधाद्युप॰ अनंतरं छाग
र्णदक्षिणवामकरद्वयधृतशक्तिकमंडलुं यज्ञोपवीतिनमग्निंध्यात्वा एह्येहिसर्वामरहव्यवाहमुनिप्रवर्यैरभितोभिजुष्ट तेजोवता
लोकगणैः सह मे ममाध्वरंपाहिकवेनमस्ते भोअग्नेइहागच्छइहतिष्ठ अग्निंसांगंसपरिवारंसायुधंसंशक्तिकं अस्मिन्कलशे आवाह॰ ॐ अ
ग्निमंत्रेण रक्तांपताकांरक्तंध्वजंचोच्छ्रयेत् ततः त्वंनो अग्नेवरुण॰त् अग्नयेन॰ अग्निंआ॰ अग्नये॰ गंधाद्युपचारान्॰ आग्नेयः पु
रुषोदेवमयोऽव्ययः धूम्रकेतूरजोध्यक्षस्तस्मैनित्यंनमोनमइतिनत्वा॰ अग्नयेसांगायसपरिवारायसायुधायसशक्तिकाय एतंमा
समर्पयामीतिबलिंदत्वाचमेत् ततोदक्षिणेगत्वाप्रतिद्वारशाखंकलशद्वयंसंस्थाप्य तत्रकलशद्वयेवामनाख्यदिग्गजाय॰ वामना
वामनाख्यदिग्गजायनमः गंधाद्युपचारान्॰ तत्रयजुर्वेदिनावृत्विजो अस्मिन्दक्षिणद्वारेशांतिसूक्तजपार्थेनत्वामहंवृणे कातराक्षी
दस्त्वेषुभोविष्णुदेवतः काश्यपेयस्तुविप्रेंद्रऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वा ॐ इषेत्वोर्जेत्वा॰णे इतिप्रत्येकंगंधादिभिरभ्यर्च्य ततो
महिषारूढंधृतदंडपाशदक्षिणवामकरद्वयंकृष्णांजननयोपमं अग्निसमलोचनंयमंध्यात्वा ॐ एह्येहिवैवस्वतधर्मराजसर्वामरैरर्चितधर्ममू

शुभाशुभानंदशुचामधीशशिवायनःपाहिमखंनमस्ते भोयम इहागच्छ॰ यमंसांगं॰ द्वारकलशे आवाहयामि आयंगौः॰स्वः इतिमंत्रेण
ष्णांपताकांकृष्णांध्वजंचोच्छ्रयेत् ततोयमायसो॰तः यमाय॰ यमंआ॰ यमाय॰ गंधाद्यु॰ महामहिषमारूढंदंडहस्तंमहाबलम् आवाहयामिय
स्मिन्पूजेयंप्रतिगृह्यताम् यमायनमः एतंमाषभक्तबलिंसमर्पयामीतिबलिंदत्वाचमेत् ततोनैर्ऋत्यांगत्वातत्रपूर्ववत्कलशंसंस्थाप्य
नमः कुमुदंआ॰ दुर्जयाय॰ दुर्जयंआ॰ कुमुददुर्जयाभ्यां॰ गंधाद्युप॰ ततो नरारूढंमहाकायंखड्गहस्तंमहाबलम् राक्षसैर्वेष्टितं
रणभूषितम् निर्ऋतिंध्यात्वा ॐ एह्येहिरक्षोगणनायकस्त्वंविशालवेतालपिशाचसंघैः ममाध्वरंपाहिपिशाचनाथलोकेश्वरत्वांभ
मोनिर्ऋतेइहागच्छइहतिष्ठ निर्ऋतिं॰ कलशेआवाहयामि ॐ मोषुणः॰सह इतिमंत्रेणनीलांपताकांनीलध्वजंचोच्छ्रयेत्
ानमिच्छ॰स्त निर्ऋतये॰ निर्ऋतिंआ॰ निर्ऋतये॰ गंधाद्युप॰ निर्ऋतिंखड्गहस्तंचसर्वलोकैकपावनम् आवाहयामियज्ञेस्मि
गृह्यताम् इतिनत्वा निर्ऋतयेसांगाय॰ एतंमाषभक्तबलिंसमर्पयामीतिबलिंदत्वाचमेत् ततःपश्चिमेगत्वाकलशद्वयंप्रतिद्वार
संस्थाप्य अस्मिन्कलशद्वये अंजनाख्यदिग्गजाय॰ गंधाद्यु॰ तत्रसामवेदिनावृत्विजौ अस्मिन्पश्चिमद्वारेशांतिसूक्तजपार्थेनत्व
मवेदस्तुपिंगाक्षोजाग्मतःशक्रदैवतः भारद्वाजस्तविप्रेंद्र ऋत्विक्त्वंमेमखेभवेतिप्रत्येकंवृत्वा ॐ अग्नआयाहि॰षि इतिमंत्रेण
[illegible] ततोमकरस्थंपाशहस्तंशुक्लवर्णं किरीटधारिणं वरुणंध्यात्वा एह्येहियादोगणवारिधीनांगणेनपर्जन्यस

[illegible]धानहृद्रा[illegible]यमान पाहित्वमस्मान् भगवन्नमस्ते भोवरुणइ॰ वरुणंसांगं॰ द्वारकलशे आवाहयामि इमंमेवरुण॰ रान्वके इतिमं
नाकांश्वेतंध्वजंचोच्छ्रयेत् तत्त्वायामि॰षीः वरुणाय॰ गंधाद्यु॰ पाशहस्तंचवरुणमर्णसांपतिमीश्वरम् आवाहयामियज्ञेस्मिन् पूजे
ताम् इतिनत्वा वरुणायसांगाय॰ एतंमाष॰ इतिबलिंदत्वा चमेत् वायव्यांगत्वापूर्ववत्कलशंसंस्थाप्य तत्र पुष्पदंताय॰ पुष्पदंतंअ
र्थायन॰ सिद्धार्थआवाहयामि पुष्पदंतसिद्धार्थाभ्यांन॰ गंधाद्युपचारान्॰ ततोमृगाधिरूढंधूम्रवर्णंचित्रांबरधरंयुवानंवरध्वज
मामहस्तद्वयंवायुंध्यात्वा एह्येहियज्ञेममरक्षणायमृगाधिरूढः सहसिद्धसंघैः प्राणाधिपःकालकवेःसहायगृहाणपूजांभगव
वायोइ॰ वायुंसांगं॰कलशेआ॰ वायोशतं॰पाजसा इतिमंत्रेण धूम्रांपताकांधूम्रध्वजंचोच्छ्रयेत् ॐतववाय॰हे वायवेन॰ गं
काशगंन्चैवपवनंवेगवद्गतिम् आवाहयामियज्ञेस्मिन् पूजेयंप्रतिगृह्यताम् अनाकारोमहौजाश्चयश्चादृष्टगतिर्दिवि तस्मैपूज्यायज
ह्नंनमामिचेतिनत्वा वायवेसांगाय॰ एतंमाष॰मि इतिबलिंदत्वान्चमेत् ततःउत्तरद्वारेकलशद्वयंप्रतिद्वारशाखंसंस्थाप्य तत्रकल
भौमदिग्गजाय॰ सार्वभौमदिग्गजंआ॰ सार्वभौमदिग्गजाय॰ गंधाद्यु॰ तत्रअथर्ववेदिनावृत्विजौ अस्मिन्नुत्तरद्वारेशांतिसूक्तजपार्थंमे
हंवृणे बृहन्नेत्रोथर्ववेदोनुष्टुभोरुद्रदैवतः वैशंपायनविप्रेंद्रऋत्विक्त्वंमेभवेवर्ततिप्रत्येकंवृत्वा शन्नोदेवी॰नः इतिमंत्रेणप्रत्येकंगंधा
चारैःपूजयेत् ततो नरयुतविमानस्थंकुंडलहारकेयूररुचिरवरगदाधरदक्षिणवामभुजद्वयंमुकुटिनंमहोदरंमहाकायंहरितवर्णंकुबेरंध्याय

ॐ एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धम् सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते भो सोम इहा॰ द्वारकल
येआवाह॰ ॐ आप्याय॰ थे इतिमंत्रेण हरितां पताकां हरितं ध्वजं चोच्छ्रयेत् सोमो धेनुं॰ दस्मै सोमाय॰ सोमं॰ सोमाय॰ गंधाद्यु॰ सर्वनक्ष
ध्येतु सोमो राजा व्यवस्थितः तस्मै सोमाय देवाय नक्षत्रपतये नमः इति नत्वा सोमाय सांगाय॰ एतं माष॰ इति बलिं दत्वाचमेत् ततः ईश
त्वा तत्र पूर्ववत् कलशं निधाय तत्र सुप्रतीकाय॰ सुप्रतीकं॰ मंगलाय॰ मंगलंआ॰ सुप्रतीकमंगलाभ्यां॰ गंधाद्यु॰ ततो वृषारूढंद
स्तयोर्वरत्रिशूलधरं त्रिनेत्रं शुक्लवर्णमीशानं ध्यात्वा ॐ एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वांगधरेण सार्द्धम् लोकेन यज्ञेश्वर यज्ञ
पूजां भगवन्नमस्ते भो ईशान इहागच्छ॰ कलशे आवाहया॰ अभित्वादेव॰ महे इतिमंत्रेण श्वेतां पताकां श्वेतं ध्वजं चोच्छ्रयेत्
॰ स्वस्तये ईशानाय॰ गंधाद्यु॰ वृषस्कंधसमारूढं शूलहस्तं त्रिलोचनम् आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यताम् सर्वाधिप
शानः शुक्ल ईश्वरः शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमो नम इति नत्वा ईशानाय सां॰भि इति बलिं दत्वाचमेत् ततः ईशानपूर्वयोर्म
द्दिश्य अनंतशयनासीनं फणासप्तकमंडितम् पद्मशंखधरोर्ध्वाधोदक्षिणं च करद्वयम् चक्रगदाधरदक्षिणवामकरद्वयं नीलवर्णं
त्वा एह्येहि पातालधरामरेंद्र नागांगनाकिन्नरगीयमान यक्षोरगेंद्रामरलोकसंघैरनंत रक्षाध्वरमस्मदीयम् भो अनंत इहा॰ अ
॰ आ... ॰ स्वः इतिमंत्रेण श्वेतां पताकां श्वेतं ध्वजं चोच्छ्रयेत् ॐ आयंगौः॰ स्वः अनंताय॰ गंधाद्यु॰ योसावनंतरूपे

...र्धन्मूर्ध्नितस्मैनित्यंनमोनमइतिनत्वा अनंतायसांगायसपरिवाराय॰ एतंमाष॰ इतिबलिंदत्वाचमेत् ततोनैर्ऋत्यप
ध्येऊर्ध्वमुद्दिश्य अक्षसूत्रकुशमुष्टिधरोर्ध्वाधोदक्षिणकरंस्रुवकमंडलुधरोर्ध्वाधोवामकरद्वयंचतुर्मुखंश्मश्रुजटिलंलंबोदरं रक्तवर्णंब्रह्माण
ॐ एह्येहिसर्वाधिपतेस्फुरेंद्रलोकेनसार्द्धंपितृदेवताभिः सर्वस्यधातास्यमितप्रभावोविशाध्वरंनःसततंशिवाय भोब्रह्मन्निहागच्छइहतिष्ठब्र
गंभावा॰ ॐ ब्रह्मजज्ञानंम॰ विवः इतिमंत्रेणरक्तांपताकांरक्तध्वजंचोच्छ्रयेत् ॐ ब्रह्मजज्ञानं॰ विवः ब्रह्मणेन॰ ब्रह्माणं॰ ब्रह्मणे॰ गंधाद्यु
तुर्मूर्तिर्वेदावासः पितामहः यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मैनित्यंनमोनमइतिनत्वा ब्रह्मणेसांगाय॰ इतिबलिंदत्वाचमेत् ततोमंडपमध्ये
दशहस्तदीर्घोत्रिहस्तविस्तृतोविचित्रवर्णः ॐ इंद्रस्यवृष्णोव॰ मुदस्थात् इतिमंत्रेणस्थाप्य ॐ ब्रह्मजज्ञानं॰ वः ब्रह्मणेन॰ गं
उपषोडशस्तंभेषु सर्वेभ्योदेवेभ्योनमः वंशेषु किंनरेभ्योनमः पृष्ठेपन्नगेभ्योनमइतिपूजयेत् ततः पूर्वस्यांदिशिमंडपाद्बहिः किंचिद्दू
त्रोपविश्य त्रैलोक्येयानिभूतानिस्थावराणिचराणिच ब्रह्मविष्णुशिवैःसार्द्धंरक्षांकुर्वंतुतानिमे देवदानवगंधर्वायक्षराक्षसपन्नगाः ऋ
नयोगावोदेवमातरएवच सर्वेममाध्वरेरक्षांप्रकुर्वंतुमुदान्विताः ब्रह्माविष्णुश्चरुद्रश्चक्षेत्रपालोगणैःसह रक्षंतुमंडपंसर्वेघ्नतुरक्षांसिसर्व
त्रैलोक्यस्थेभ्यःस्थावरेभ्योभूतेभ्योनमः त्रैलोक्यस्थानिस्थावराणिभूतान्यावा॰ त्रैलोक्यस्थेभ्यश्चरेभ्योभूतेभ्योनमः त्रैलोक्यस्थानिचर
णिभूतान्या॰ ॐ ब्रह्मणेनमः ब्रह्माणं॰ विष्णवे॰ विष्णुं॰ शिवाय॰ शिवं॰ ॐ देवेभ्योन॰ देवान् आ॰ ॐ दानवेभ्योनमः दानवान्॰ ॐ गंधर्वेभ्यो

न॰ गंधर्वान्॰ ॐ यक्षेभ्योन॰ यक्षान्॰ ॐ राक्षसेभ्योन॰ राक्षसान् आ॰ ॐ पन्नगेभ्यो॰ पन्नगान् आ॰ ॐ गोभ्योन॰ गाः आ॰ ॐ ऋषिभ्यो
न॰ ऋषीन् आ॰ ॐ मनुष्येभ्यो॰ मनुष्यान्॰ ॐ देवमातृभ्यो॰ देवमातृः॰ इत्यावाह्य प्रत्येकंगंधाद्युपचारैः संपूज्य प्रत्येकंमाषभक्तबलीन् दद्यात्
तोथजमानः साचार्यर्त्विक् प्रक्षालितपाणिपादआचांतः प्राग्द्वारेणमंडपंप्रवेशयेत् यजमानो ग्न्यायतनाद्दक्षिणतउपविशेत् आचार्यस्तुकुंडपश्चिम
पविश्याचम्य प्राणानायम्यामुककर्मण्यग्निप्रतिष्ठांकरिष्ये तदंगतयासंमार्जनमेखलायोनिदेवतास्थापनंपूजनंचकरिष्येइतिसंकल्प्या
यकुशोदकेनकुंडंप्रोक्ष्यउपरिमेखलायांश्वेतवर्णालंकृतायां इदंविष्णुरितिविष्णुमावाह्यसंपूज्य मध्यममेखलायांरक्तवर्णालंकृतायांब्रह्
ब्रह्माणं अधोमेखलायांकृष्णवर्णालंकृतायां कद्रुद्रायेति रुद्रंयोन्यांरक्तवर्णालंकृतायां गौरीर्मिमायेतिगौरीमावाह्यसंपूज्य ततः स्व
ग्निंप्रतिष्ठाप्य ग्रहवेद्यांपूर्वोक्तप्रकारेणसर्वतोभद्रमंडलंकृत्वा तत्रदेवताआवाहयेत् प्राणानायम्यदेशकालौस्मृत्वासर्वतोभद्रेमंडल
नमहंकरिष्येइतिसंकल्प्य ब्रह्मजज्ञानंगौतमोवामदेवोब्रह्मात्रिष्टुप् ब्रह्मावाह॰ ॐ ब्रह्मजज्ञानं॰ वः मध्येब्रह्मणेनमः ब्रह्माणंआवाहयामि
स्वगोतमः सोमोगायत्री ॐ आप्यायस्वसमे॰ थे उत्तरेसोमाय॰ सोमं॰ अभित्वाजीगर्तिःशुनःशेपईशानोगायत्री ॐ अभित्वादेव॰ हे ईशान
य॰ ईशानंआ॰ इंद्रंवोमधुच्छंदाइंद्रोगायत्री ॐ इंद्रंवोवि॰ लः॰ पूर्वेइंद्रायन॰ इंद्रंआ॰ अग्निंदूतंकाण्वोमेधातिथिरग्निर्गायत्री ॐ अग्नि
[illegible] ग्निंआ॰ यमासोमं यमोयमोनुष्टुप् ॐ यमायसोमं॰ तः दक्षिणेयमाय॰ यमंआ॰ मोषुणोघोरः कण्वोनिर्ऋतिर्गायत्री

...तये॰ निर्ऋतिं आ॰ तत्वायामि शुनःशेपो वरुणस्त्रिष्टुप् ॐ तत्वायामि॰ षीः पश्चिमे वरुणाय॰ वरुणं॰ तववाया॰

...सो वायुर्गायत्री ॐ तववायवृत॰ हे वायव्यां वायवेन॰ वायुं॰ ज्मया अत्र मैत्रावरुणो वसवस्त्रिष्टुप् ॐ ज्मया अत्र॰ स्य॰ वायुसोममध्ये

...स्कभ्यो॰ अष्टौवसून् आ॰ आरुद्रासः श्यावाश्व एकादशरुद्राजगती ॐ आरुद्रासः॰ वे सोमेशानयोर्मध्ये एकादशरुद्रेभ्यो॰ एक...

...द्रान्॰ त्यान्नुसामदो मत्स्यो द्वादशादित्यागायत्री ॐ त्यान्नुक्षत्रियां॰ ये ईशानेंद्रयोर्मध्ये द्वादशादित्येभ्यो॰ द्वादशादित्यान् आ॰ अ...

...गणो अश्विनावुष्णिक् ॐ अश्विनावर्तिर॰ तं इंद्राग्नियममध्ये अश्विभ्यां नमः अश्विनौ आ॰ ओमासश्चर्षणी धृत इति गृत्समदो...

...त्री ॐ ओमासश्च॰ तं अग्नियममध्ये विश्वेभ्योदेवेभ्यो॰ विश्वान्देवान् आ॰ अभित्यं वामदेवसप्तयक्षा अत्यष्टी ॐ अभित्यंदे...

...ऋति मध्ये सप्तयक्षेभ्यो॰ सप्तयक्षान्॰ आयंगौः सार्पराज्ञी सर्पा गायत्री ॐ आयंगौः॰ स्वः निर्ऋति वरुणमध्ये भूतनागेभ्यः॰ ...

...॰ अप्सरसामैतसर्व्यं शृंगो गंधर्वाप्सरसोऽनुष्टुप् ॐ अप्सरसांगंधर्वाणां॰ मः वरुणवायुमध्ये गंधर्वाप्सरोभ्यो॰ गंधर्वाप्सरसः आ...

...ारं मातास्कंदस्त्रिष्टुप् ॐ कुमारं माता॰ तौ ब्रह्मसोममध्ये स्कंदाय॰ स्कंदं आ॰ ऋषभ मा ऋषभो वैराजोनुष्टुप् ॐ ऋषभं मा॰ वां ब्रह्मसोममध्ये...

...ऋषभाय॰ ऋषभं आ॰ अदितिर्लोक्यो बृहस्पतिः शूलमहाकालोनुष्टुप् ॐ अदितिर्द्यौज॰ वः ब्रह्मेशानयोर्मध्ये दक्षादिसप्तगणेभ्यो॰ दक्षादिस...

...सगणान् आ॰ जातवेदसे कश्यपो दुर्गा त्रिष्टुप् ॐ जातवेदसे॰ ग्निः ब्रह्मेंद्रमध्ये दुर्गायै नमः दुर्गां आ॰ इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री ॐ इदंवि-

ष्णु॰रे ब्रह्मेंद्रमध्ये विष्णवेन॰ विष्णुं आ॰ उदीरतांशंखः स्वधात्रिष्टुप् ॐ उदीरता॰षु ब्रह्माग्निमध्ये स्वधायै॰ स्वधांआ॰ परंमृत्योसंकुशिकोमृत्युरो
गास्त्रिष्टुप् ॐ परंमृत्यो॰न् ब्रह्मयममध्ये मृत्युरोगेभ्यो॰ मृत्युरोगान् आ॰ गणानांत्वागृत्समदोगणपतिर्जगती ॐ गणानांत्वा॰ ब्रह्मनिर्ऋतिमध्ये
णपतये॰गणपतिं॰ शन्नोदेवीरांबरिषः सिंधुद्वीपआपोगायत्री ॐ शन्नोदेवी॰ नः ब्रह्मवरुणमध्ये अद्भ्योनमः अपः आवा॰ मरुतोयस्यरा
गोमरुतोगायत्री ॐ मरुतोयस्य॰ नः ब्रह्मवायुमध्ये मरुद्भ्यो॰ मरुतः आ॰ स्योनामेधातिथिर्भूमिर्गायत्री ॐ स्योनापृथिवीभवा॰ थ
ादमूलेकर्णिकाधः पृथिव्यै॰ पृथिवीं॰ इमंमेगंगेइत्यस्यसिंधुक्षित्प्रैयमेधोयमुनासरस्वत्यौजगती ॐ इमंमेगंगेय॰ या तत्रैवगंगादि
॰ गंगादिसर्वनदीः आवा॰ धाम्नोधाम्नोगौतमोवामदेवः सप्तसागरानुष्टुप् ॐ धाम्नो धाम्नोराज॰च तत्रैव क्षारादिसप्तसागरेभ्यो॰
सागरान् आ॰ तदुपरिमेरवेनमः मेरुंआ॰ बाह्येपरिधौसोमादिसमीपे क्रमेणायुधानि अष्टदिक्षु गदायै॰ गदां॰ त्रिशूलायन॰ त्रिशूलं
य॰ वज्रंआ॰ शक्तये॰ शक्तिंआ॰ दंडाय॰ दंडंआ॰ खड्गाय॰ खड्गं आ॰ पाशाय॰ पाशंआ॰ अंकुशाय॰ अंकुशंआ॰ तद्बाह्ये उत्तरादिक्रमे
म॰गौतमं॰ भरद्वाजाय॰ भरद्वाजंआ॰ विश्वामित्राय॰ विश्वामित्रंआ॰ कश्यपाय॰ कश्यपंआ॰ जमदग्नये॰ जमदग्निं आ॰ वसिष्ठाय॰ व
नये॰ अत्रिंआ॰ अरुंधत्यै॰ अरुंधतींआ॰ तद्बाह्ये पूर्वाद्यष्टदिक्षु ऐंद्र्यैन॰ ऐंद्रींआ॰ कौमार्यै॰ कौमारींआ॰ ब्राह्म्यै॰ ब्राह्मीं॰ वाराह्यै॰ वार
ैष्णव्यै॰ वैष्णवीं आ॰ माहेश्वर्यैन॰ माहेश्वरींआ॰ वैनायक्यै॰ वैनायकींआ॰ तत्रमध्ये सूर्याय॰ सूर्यंआ॰ बाह्ये

...नआ० भौमाय० भौमंआ० बुधाय० बुधंआ० बृहस्पतये० बृहस्पतिंआ० शुक्राय० शुक्रंआ० शनैश्चराय० शनैश्चरं
वेन० राहुंआ० केतवेन० केतुंआवाहयामि  एतादेवताः प्रतिष्ठाप्यसंपूज्य पूर्वोक्तप्रकारेणाष्टगंधैः क्षौमवस्त्रोपरि ग्रहयंत्रंविलिख्य
थाक्रमेणसंस्थाप्य तन्नकुंकुमाक्षतैः ग्रहान्साधि प्रत्यधिदेवतान् स्थापयेत्  तद्यथा मंडलेआदित्यादिदेवतास्थापनंकरिष्ये इतिसं
ग्रासनःपद्मकरोपद्मग०  आकृष्णेनरजसा हिरण्यःस्तूपःसवितात्रिष्टुप् सूर्यावाहनेविनियोगः ॐ भूर्भुवःस्वः कलिंगदेशोद्भवकाश्यपसगोत्र
च्छेति आप्यायस्वगौतमःसोमोगायत्री ॐ भूर्भुवःस्वः यमुनातीरोद्भवआत्रेयसगोत्रसोमइहा० अग्निर्मूर्धाविरूपोंगारकोगायत्री
तीसमुद्भवभारद्वाजसगोत्रभौमइहागच्छ० उद्बुध्यध्वंबुधःसौम्योबुधस्त्रिष्टुप् ॐ भू० मगधदेशोद्भवआत्रेयसगोत्र० बृहस्पते
स्पतिस्त्रिष्टुप् ॐ भू० सिंधुदेशोद्भवआंगिरसगोत्रबृहस्पतेइ० शुक्रःपाराशरःशुक्रोद्विपदाविराट् ॐ भू० भोजकटदेशोद्भवभार्ग
क्रइ० शमग्निरिरिंबिठिःशनिरुष्णिक् ॐ भू० सौराष्ट्रदेशोद्भवकाश्यपसगोत्रशनैश्चरइ० कयानोवामदेवोराहुर्गायत्री ॐ भू० राठिनापु
नसगोत्रराहोइहागच्छ० केतुंमधुच्छंदाःकेतुर्गायत्री ॐ भू० अंतर्वेदिसमुद्भवजैमिनिसगोत्रकेतो० अथाधिदेवताः त्र्यंबकोवसिष्ठोरु
ष्टुप् गौरीर्मिमायदीर्घतमाउमाजगती यदक्रंदोदीर्घतमाःस्कंदस्त्रिष्टुप् विष्णोर्नुकंदीर्घतमानारायणस्त्रिष्टुप् ब्रह्मजज्ञानगौतमोवामदेवो ब्र
त्रिष्टुप् इंद्रंवोमधुच्छंदाइंद्रोगायत्री यमायसोमंयमोयमोनुष्टुप् मोषुणोघोरःकण्वः कालोगायत्री उषोवाजंप्रस्कण्वश्चित्रगुप्तोबृहती अ

मत्यधिदेवताः अग्निंकाण्वोमेधातिथिरग्निर्गायत्री अप्सुमेमेधातिथिरापोनुष्टुप्ः स्योनामेधातिथिर्भूमिर्गायत्री इदंविष्णुर्मेधातिथिर्विष्णुर्गायत्री
द्रश्रेष्ठानिगृत्समदइंद्रस्त्रिष्टुप् इंद्राणींवृषाकपिरिंद्राणीपंक्ति[illegible]प्रजापतेहिरण्यगर्भः प्रजापतिस्त्रिष्टुप् आयंगोःसर्पराज्ञीसर्पागायत्री ब्रह्मजज्ञा
षोसदेवोब्रह्मात्रिष्टुप् ततउत्तरतः गणानांत्वागृत्समदोगणाधिपतिर्जगती जातवेदसेकश्यपोदुर्गात्रिष्टुप् तववायोव्यश्वांगिरसोवायुर्गायत्री
दृत्सआकाशोगायत्री एषोउषाःप्रस्कण्वोश्विनौगायत्री यद्वाराहोरुत्तरेविनायकंशनेरुत्तरेवायुंराहोर्दक्षिणेआकाशंकेतोर्दक्षिणेश्विनौ उत्तरे
तिनावामदेवः क्षेत्राधिपतिरनुष्टुप् वास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप् ततःलक्षकोटिहोमयोः सामध्वनिशरीरस्त्वंवाहनंपरमेष्ठिन
रोनित्यमतःशांतिंप्रयच्छमे इतिमंत्रेणेंद्रं मित्रंवरुणमितिवागरुत्मंतमुत्तरतः आवाह्यदिक्पालानष्टदिक्षु तन्मंत्रैरावाह्य ततरवेःपूर्वे
वासुकिं भौमस्याग्नेयेतक्षकं बुधोत्तरेकर्कोटकं गुरूत्तरेपद्मं शुक्रोत्तरेमहापद्मं शनिपश्चिमेशंखपालंराहोःपुरतः कंबलंकेतोःपुरतः
पयेत् ततःपूर्वे अश्विन्यादिसप्तनक्षत्राणि विष्कंभादिसप्तयोगान् बवबालवकरणेसप्तद्वीपानिऋग्वेदंच दक्षिणेपुष्यादिसप्तनक्षत्रा
सप्तयोगान् कौलवतैतिलकरणेसप्तसागरान् यजुर्वेदंच पश्चिमेस्वात्यादिसप्तनक्षत्राणिवज्रादिसप्तयोगान्गरवणिजकरणेसप्तपाताल
दंच उत्तरेभिजिदादिसप्तनक्षत्राणि साध्यादिषट्योगान्विष्टिकरणंभूरादीन्सप्तलोकान् अथर्ववेदंच वायव्येध्रुवंसप्तर्षीश्च ततोय
[illegible]सप्तकुलाचलान् अष्टौवसून् द्वादशादित्यान् एकादशरुद्रान् एकोनपंचाशन्मरुतः षोडशमातृः षट्ऋतून्द्वादशमा

...षसंवत्सरान् सुपर्णान्नागान् सर्पान् यक्षान् गंधर्वान् विद्याधरानप्सरसः रक्षांसि भूतानि मनुष्यान् इति कोटिहोमे
ब्रह्मा मध्ये जनार्दनः पश्चिमे रुद्रः उत्तरे स्कंदः ततो ध्यायेत् तदस्तु मित्रावरु० गृहावै० इत्यावाह्य पुरुषसूक्तेन षोडशोपचारैः संपूज्य प्र
आदित्या वसवो रुद्रा मरुतो लोकपालास्तथा ब्रह्मा जनार्दनश्चैव शूलपाणिर्भगाक्षहा अत्र सन्निहिताः सर्वे भवंतु मखभागिनः पूजां गृह्णंतु
भक्त्योपपादिताम् कुर्वंतु च शुभं सर्वे यज्ञकर्तुः समीहिता इति ततो वेदीशान्यां कुंभं संस्थाप्य वरुणं संपूज्य देवदानवसंवादे इति संप्रार्थ्य
...तेत् चक्षुषी आज्येनेत्यंतमुक्त्वा नवग्रहानष्टशताष्टाविंशत्यष्टान्यतमसंख्याभिः समिच्चर्वाज्याहुतिभिरधिदेवताद्याः प्रधानदश
...र्वा समिच्चर्वाज्याहुतिभिः नवग्रहानयुतलक्षकोट्यान्यतरसंख्याभिर्यवव्रीहिघृततिलान्यतराहुतिभिः शेषेण स्विष्टकृतमित्यादि च
...कवसर्वेषामिति पक्षे तथोल्लेखः लक्षकोटिहोमयोर्गरुत्मंतमष्टशतादिसंख्यया समिदादिभिः कोटिहोमे ब्रह्मादीनां गरुडवत् चर्वेकाहु
स्थाल्यो वदानधर्मश्च लक्षहोमादेर्बहुदिनसाध्यत्वे चरुस्विष्टकृदाद्यदिन एव कार्यं यावद्धोमसमाप्ति प्रतिदिनं ग्रहपूजा कार्या कोटिहोमे प्र...
र्णाहुतिरपि होमसमाप्तावग्निं संपूज्य स्विष्टकृदादि प्रायश्चित्तहोमांतं कृत्वाग्नेः समंताद्दिक्पालेभ्यो वेदेः समंतान्नवग्रहेभ्यो वेदे रुत्तरतो विनायके...
सप्तभ्यो गरुत्मते च तत्तन्मंत्रैः माषभक्तबलीन् दत्वा क्षेत्रपालबलिं दुर्ब्राह्मणेन शूद्रेण वा चतुष्पथे क्षेपयेत् ततः प्रक्षालितपादो ह्यादशागृहीतेन चतुर्गृ
हीतेन वाज्येन वस्त्रनारिकेरादियुतेन पूर्णाहुतिं जुहुयात् तत्र मंत्राः समुद्रादूर्मिरित्यस्य गौतमो वामदेवो वाग्निस्त्रिष्टुप् मूर्धानं दिवो बार्हस्पत्यो भा...

द्वाजोवैश्वानरस्त्रिष्टुप् पुनस्त्वग्निर्वस्रुरुद्रादित्यास्त्रिष्टुप् पूर्णादर्वि विश्वेदेवाः शतक्रतुरनुष्टुप् सप्तते अग्ने सप्त नवाग्निर्जगती धामंतेगौतमोव
मदेव आपोजगती एतैर्हुत्वा इदमग्नये वैश्वानराय वस्रुरुद्रादित्येभ्यः शतक्रतवे सप्तवते अग्नये द्रवश्चनममेतित्यागः अथवसोर्द्धारांपातयेत् तत्र
त्राः अग्निमीळइतिनवानां मधुच्छंदा अग्निर्गायत्री विष्णोर्नुकमितिषण्णांदीर्घतमाविष्णुस्त्रिष्टुप् आतेपितरितिपंचदशानां गृत्समदोरुद्रस्त्रि
प् स्वादिष्ठयेतिदशानां मधुच्छंदाः पवमानसोमोगायत्री महावैश्वानरज्येष्ठसामनीचपूर्णपात्रविमोकादिकर्मशेषंसमाप्यसर्त्विक्श्रेयः
त्वाकुंडेशानभागेस्वस्तिकोपरि भद्रासनेस्थितंयजमानंग्रहकलशोदकेन समुद्रज्येष्ठाइत्यादिभिःसुरास्त्वेत्यादिभिश्चाभिषिंचेत्
ततोयजमानः सर्वौषधीभिरनुलिप्य स्नात्वा धेन्वादिदक्षिणांपूर्वोक्तमंत्रैर्दद्यात् अयुतहोमेएकैकं लक्षहोमेदशकोटिहोमे शतंन्यून
मंकर्तव्यम् मुख्याभावेस्रुवर्णंदद्यात् ततोद्वारजापकेभ्योन्येभ्यश्चदक्षिणांदत्वा पूर्वस्थापितदेवताः संपूज्याचार्यायदत्वाग्निंसंपू
ज्यत्वागच्छगच्छेत्यग्निंविसृज्य ब्राह्मणान्संभोज्य कर्मसमाप्तिंवाचयित्वा कर्मेश्वरार्पणंकृत्वा नृत्याद्युत्सवंकारयेत् इतिदिनकरभट्ट
सारेलक्षहोमादिपद्धतिः अथकोटिहोमेशतमुखादिभेदाः हेमाद्रौभविष्योत्तरे शताननोदशमुखोद्विमुखोवैकमुखस्तथा चतुर्विधो
कोटिहोमोविधीयते कृत्वाकुंडशतंदिव्यंयथोक्तंहस्तसंमितम् एकैकस्मिंस्ततःकुंडेदशविप्रान्नियोजयेत् एकस्थानप्रणीतेग्नौसर्वतःपरि
[illegible] कुंडे कुंडेयथोदितम् अन्नसर्वेतिकर्तव्यतापूर्ववत् कुंडानांहस्तमात्रता घृतादिशी प्रदाहि द्रव्यविषयतिलयवादौतु

...हस्तमात्रकम् द्विगुणंलक्षहोमेचकोटिहोमेचतुर्गुणमितिवाक्यात् लक्षार्द्धेत्रिकरंकुंडंलक्षहोमेचतुःकरमितिवाक्य
रंत्रिकरंवाबोद्धव्यंअत्रमंडपपरिमाणंशतहस्तत्वाद्यार्थिकं अर्थात्परिमाणमितिकात्यायनोक्तेः अत्रचाचार्योनैर्ऋत्यकुंडेग्निंप्रतिष्ठापयेत्
मग्निमन्येषुऋत्विजःप्रणयेयुः सहस्रब्राह्मणसंख्याचऋत्विग्विषया तेनसहस्रंऋत्विजः इतिशतमुखः यदादशमुखःकार्यःकोटिहोम
विप्राणांद्विशतिंतत्रस्थविभज्यनियोजयेत् अत्रचैकैकस्मिन्कुंडेदशलक्षहोमऋत्विजांविंशतिश्च कुंडंपंचकरंप्रोक्तंदशलक्षाहुतौक्रमा
त्सरोक्तम् शेषंपूर्ववत् इतिदशमुखः अथकुंडद्वयंकृत्वाविभज्यचविभावसुम् होमंकुर्युर्द्विजाभूयःसंस्कृत्यविधिपूर्वकम् शतंतत्र
द्विप्राणांप्रविभज्यवै यद्वामासेर्द्धमासेवाकार्यकालउपस्थिते तदातुद्विमुखःकार्यःकोटिहोमोविचक्षणैः अत्रपंचाशदृत्विजः प्रतिकुंड
इतिद्विमुखः अत्रमंडपविशेषोभविष्योत्तरे उत्तमंशतहस्तंतुतदर्द्धेनतुमध्यमम् जघन्यंतुतदर्द्धेनशक्तिकालाद्यपेक्षया शतमुखेशत
मुखेपंचाशद्धस्तः द्विमुखेपंचविंशतिहस्तः शतहस्तमंडपेदशहस्तान् शतकोष्टकान्कृत्वा तन्मध्येशतंद्विहस्तानिकुंडानिकुर्यात् ए
योरपीति अत्रकोटिहोमानुसृतेःकोटिधर्माएवंभवंति इतिश्रीमन्नारायणभट्टसूरिसूनुश्रीमद्रामकृष्णभट्टात्मजदिनकरकृतेशांतिसारेर
त्वादिभेदनिरूपणम् अथग्रहशांतयः तत्रादित्यशांतिः मदनरत्नेभविष्योत्तरे आदित्यवारंहस्तेनपूर्वंगृह्यविचक्षणः मंत्रोक्तविधिना
कुर्यात्पूजांसमाहितः प्रत्यर्कंसप्तनक्तानिकृत्वाभक्तिपरोनरः ततस्तुसप्तमेमासेकुर्याद्ब्राह्मणभोजनम् भास्करंशक्त्यासौवर्णंकृत्वायत्नेनमानवः

ताम्रपात्रेस्थापयित्वारक्तपुष्पैः प्रपूजयेत् रक्तवस्त्रयुगच्छन्नछत्रोपानद्युगान्वितम् घृतेनस्नापयित्वाचलड्डुकान् विनिवेद्यच होमंतिलघृतैः कुर्य
रविनाम्नाचमंत्रवित् समिधोऽष्टोत्तरशतमष्टाविंशतिरेवच होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच समिधोर्ऽर्कसमिधः मंत्रेणानेनविदुषे ब्राह्म
यप्रदापयेत् आदिदेवनमस्तुभ्यंसप्तसप्तेदिवाकर त्वंरवेतारयस्वास्मानस्मात्संसारसागरात् सूर्यपीडास्फुघोरास्फुकृताशांतिःशफुभप्रदा
त्यशांतिः अथचंद्रशांतिः तत्रैव तद्वच्चित्रास्फुसंगृह्यसोमवारंविचक्षणः अनेनैवोक्तविधिनाकुर्यात्पूजादिकंविधोः सप्तमेतुततःप्राप्ते
णभोजनम् सप्तमेनक्ते कांस्यपात्रेथसंस्थाप्यसोमंरजतसंभवम् श्वेतवस्त्रयुगच्छन्नंश्वेतपुष्पैः प्रपूजितम् पादुकोपानहच्छत्रंभो
नम् होमंघृततिलैःकुर्यात्सोमनाम्नाचमंत्रवित् समिधोष्टोत्तरशतमष्टाविंशतिरेववा होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच समि
दध्यन्नशिखरेकृत्वाब्राह्मणायनिवेदयेत् कृत्वासोमंधृत्वेत्यर्थः मंत्रेणानेनराजेंद्रसम्यक्भक्त्यासमन्वितः महादेवजातिवल्लीपु
डुर सोमसोम्योभवास्माकंसर्वदातेनमोनमः एवंकृतेमहासौम्यःसोमस्तुष्टिकरोभवेत् इतिचंद्रशांतिः अथांगारकशांतिस्तत्रैव स्व
कंगृह्यक्षमायांनक्तभोजनम् क्षमाभूमिः सप्तमेत्वथसंप्राप्तेहेमंताम्रेनिवेश्यवै रक्तवस्त्रयुगच्छन्नंकुंकुमेनानुलेपितम् निवेद्यभ
रंपुष्पधूपाक्षतादिभिः होमंघृततिलैःकुर्यात्कुजनाम्नाचमंत्रवित् समिधोऽष्टोत्तरशतमष्टाविंशतिरेववा होतव्यामधुसर्पिर्भ्यांद
[illegible] मंत्रेणानेनतंदद्याद्ब्राह्मणायकुटुंबिने कुजकुप्रभवोपित्वंमंगलःपरिगद्यसे अमंगलंनिहत्याशफुसर्वदायच्छ

[illegible]दुष्कृतंशांतिमाप्नुयात् इत्यंगारकशांतिः अथबुधशांतिः विशाखास्तुबुधंगृह्यसप्तनक्तान्यथाचरेत् बुधंहेममयं[illegible]
तंकांस्यभाजने शुक्लवस्त्रयुगच्छन्नंशुक्लमाल्यानुलेपिनम् गुडोदनो संहारंब्राह्मणायनिवेदयेत् बुधत्वंबुद्धिजननोबोधवान्सर्व[illegible]
तत्वावबोधंकुरुमेसोमपुत्रनमोनमः होमंघृततिलैःकुर्याद्बुधनाम्नाचमंत्रवित् समिधोष्टोत्तरशतमष्टाविंशतिरेवच होतव्यामधुस[illegible]
ध्नाचैवघृतेनच समिधोपामार्गस्य इतिबुधशांतिः अथगुरुशांतिः तथैव गुरुंचैवानुराधास्तुपूजयेद्भक्तितोनरः पूर्वोक्तविधिना[illegible]
क्तान्यथाचरेत् हैमंहेममयेपात्रेस्थापयित्वाबृहस्पतिम् पीतांबरयुगच्छन्नंपीतयज्ञोपवीतिनम् पादुकोपानहच्छत्रकमंडलु[illegible]
जयेत्पीतकुसुमैःकुंकुमेनविलेपितम् धूपदीपादिभिर्दिव्यैःफलैश्चंदनतंडुलैः खंडखाद्योपहारैश्चगुरोरग्रेनिवेदयेत् धर्मशा[illegible]
नविज्ञानपारग विबुधार्तिहराचिंत्यदेवाचार्यनमोस्तुते होमंघृततिलैःकुर्याद्गुरुनाम्नाचमंत्रवित् समिधोष्टोत्तरशतमष्टाविंश[illegible]
व्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच समिधोश्वत्थस्य विषमस्थेगुरौ[illegible]कार्यामहाशांतिरियंनृभिः इतिगुरुशांतिः अथशुक्रशां[illegible]
ज्येष्ठास्तुसंगृह्यक्षमायांनक्तभोजनम् गुरूक्तक्रममार्गेणद्विजसंतर्पणेनच सप्तमेत्वथसंप्राप्तेरौप्यंशुक्रंतुकारयेत् वंशपात्रेचसे[illegible]
जयेत्सितपंकजैः तदभावेसितैःपुष्पैस्तांबूलैश्चंदनेनच अग्रेतस्यप्रदद्याद्भव्यंपायसंघृतसंयुतम् दद्यादनेनमंत्रेणब्राह्मणायकुटुंबिने [illegible]
वोभर्गशुक्रश्चश्रुतिस्मृतिविशारदः हित्वायग्रहकृतान्दोषानायुरारोग्यदोस्तुसः होमंघृततिलैःकुर्याच्छुक्रनाम्नाचमंत्रवित् समिधोष्टो[illegible]

शतमष्टाविंशतिरेवच होतव्यामधुसर्पिर्भ्यांदध्नाचैवघृतेनच इतिभुग्शांतिः अथशनैश्चरादिशांतिः तत्रैव शनैश्चरंराहुकेतूलोहपात्रे
न्यसेत् कृष्णागरुःस्मृतोधूपोदक्षिणाचस्वशक्तितः यथाक्रमंशमीदूर्वाकुशानांसमिधःस्मृताः सप्तमेत्वथसंप्राप्तेतद्वर्णानथकारयेत् कृ
वस्त्रयुगच्छन्नमेकैकंकारयेद्बुधः मृगनाभ्यासमालभ्यकुसरान्विनिवेद्यच होमावसानेतत्सर्वंब्राह्मणायोपपादयेत् शनैश्चरनमः
मस्तेराहवेतथा केतवेचनमस्तुभ्यंसर्वशांतिंप्रयच्छमे इतिदिनकरभट्टकृतेशांतिसारेशनैश्चरादिशांतिः अथशनैश्चरप्र
मंदस्यदिवसेस्नानमभ्यंगपूर्वकम् कार्यंदेयंचविप्रायतैलमभ्यंगहेतवे यस्तुसंवत्सरंयावत्प्राप्तेशनिदिनेनरः तैलंददातिवि
स्यात्यजतेपिवा ततःसंवत्सरस्यांतेप्राप्तेतस्यदिनेपुनः लोहंघटार्पितंसौरिंतैलकुंभेविनिक्षिपेत् लोहेताम्रमयेवाथकृष्ण
तम् कृष्णागोदक्षिणायुक्तंकृष्णाकंबलशायिनम् स्वयमभ्यंगतःस्नात्वाकृष्णपुष्पैस्तमर्चयेत् स्रुगंधिगंधपुष्पैश्चकृसरान्नै
जयित्वासूर्यपुत्रंक्षमस्वेतिपुनःपुनः कृष्णायद्विजमुख्यायतदभावेतुरायच देयःशनैश्चरोभक्त्यामंत्रेणानेनवैद्विज कोणंनील
मंदचेष्टाप्रसारिणम् छायामार्तंडसंभूतंनमस्यामिशनैश्चरम् नमोर्कपुत्रायशनैश्चरायनीहारवर्णांजनमेचकाय श्रुत्वारहस्यं
स्त्वंफलप्रदोमेभवसूर्यपुत्र नमोस्तुप्रेतराजायकृशदेहायवैनमः शनैश्चरायक्रूरायशुद्धबुद्धिप्रदायिने अथशनैश्चरशांतिः
[illegible]शनौसर्वेग्रहेश्वरे श्रावणेमासिसंप्राप्तेप्रथमेशनिवासरे लोहरूपंशनिंकृत्वास्नाप्यपंचामृतैर्नैवेद्यैः पुष्पै

...ः नामभिः पूजयेद्देतैः क्रमेणग्रहसत्तमम् कोणस्थः पिंगलोबभ्रुः कृष्णोरौद्रोंतकोयमः सौरिः शनैश्चरोमंदः पि

संस्तुतः शन्नोदेवीतिसर्वत्रवैदिकेनचपूजयेत् पूजयित्वाचनैवेद्यंततः कुर्यात्क्रमेणतु समाषभक्तंप्रथमेद्वितीयेपायसंशुभम् तृ

बिलीकार्याचतुर्थेपूरिकाशुभा अबिलीनकतंडुलपिष्टादिनिर्मितोलेह्यविशेषः प्रथमादिशब्दाः वासरपराः इतिशनैश्चरशांतिः अथ

स्तुतिः मदनरत्ने नारदउवाच ततः कृतांजलिर्भूत्वास्तुतिंचक्रेसबालकः पिप्पलादोद्विजश्रेष्ठप्रणिपत्यमुहुर्मुहुः नमस्तेकोणसंस्थ

नमोस्तुते नमस्तेबभ्रुरूपायकृष्णायचनमोस्तुते नमस्तेरौद्रदेहायनमस्तेचांतकायच नमस्तेयमसंज्ञायनमस्तेसौरयेविभो

ज्ञायशनैश्चरनमोस्तुते प्रसादंकुरुदेवेशदीनस्यप्रणतस्यच शनैश्चरउवाच परितुष्टोऽस्मितेवत्सस्तोत्रेणानेनसांप्रतम् वरंवृ

णयच्छामिवांछितम् पिप्पलादउवाच अद्यप्रभृतिनोपीडाबालानांरविनंदन त्वयाकार्यामहाभागनस्वकीयाकथंचन यावद्वर्षाणि

वाक्येनसूर्यज स्तोत्रेणानेनयोन्यस्त्वांब्रूयात्प्रातरुपस्थितः तस्यपीडानकर्तव्यात्वयाभास्करनंदन अर्द्धाष्टमिकयायोगेतावकेसंस्थि

द्वर्षसप्तपर्यंतंद्वादशजन्मद्वितीयराशिभिर्यः शनैश्चरयोगः सार्द्धाष्टमिका तववारेतुसंप्राप्तेयस्तिलान्लोहसंयुतान् शक्त्याददातिनोतस्य न्य

कार्यात्वयाविभो कृष्णांगांयस्तुविप्रायतवोद्देशेनयच्छति अर्द्धाष्टमिकयापीडातस्यकार्यात्वयानच शमीसमिद्भिर्योहोमंतवोद्देशेननिर्वपेत्

कृष्णातिलैश्चैवकृष्णपुष्पानुलेपनैः पूजांकरोतियस्तुभ्यंधूपंवैगुग्गुलंदहेत् कृष्णवस्त्रेणसंवेष्ट्यत्याज्यातस्यत्वयाव्यथा सूतउवाच एवमु

क्तः शनिस्तेनबाढमित्येवजल्प्यन नारदंसमनुज्ञायजगामनिजसंश्रयम् इतिशनैश्चरस्तुतिः अथनवग्रहस्नानानि तत्रैवविष्णुधर्मे मंजिष्ठाम
दमातंगंकुंकुमंरक्तचंदनम् पूर्णकुंभेगतंताम्रेसूर्यस्नानंविधीयते मदमातंगगजमदः उशीरंचाशिरीषंच कुंकुमंरक्तचंदनम् शंखन्यस्तमिदंस्न
नंचंद्रदोषविनाशनम् खदिरंदेवदारुंचतिलान्यामलकानिच पूर्णकुंभेकृतेरौप्येभौमपीडाविनाशनम् नदीसंगमतोयानितन्मृदासहितानिच
स्तानिकुंभेमाहेयेबुधपीडाविनाशनम् माहेयेमृन्मये औदुंबरंतथाबिल्वंवटमामलकंतथा न्यस्तंतुकुंभेसौवर्णेजीवपीडाविनाशनं गो
मदः शतपुष्पशतावरी विन्यस्ताराजतेकुंभेशुक्रपीडाविनाशनम् तिलान्माषान्प्रियंगुंचगंधपुष्पैस्तथैवच न्यस्तंकार्ष्णायसेकुं
नाशनम् गुग्गुलंहिंगुलंतालंशुभांचैवमनःशिलम् शृंगेचमाहिषेन्यस्येद्राहुपीडाविनाशनम् तालंहरितालं वराहविहितांराजन्पर्वता
ागक्षीरंखड्गपात्रेकेतुपीडाविनाशनम् ग्रहस्नानमिदंप्रोक्तंसर्वपीडाविनाशनम् इतिग्रहस्नानानि अथग्रहयोगशांतिः मदनरत्नेय
तःसंप्रवक्ष्यामिग्रहयोगाख्यशांतिकम् एकर्क्षेतिग्मराशौवाएकराश्यर्क्षभेदने शशिसूर्यसमायुक्तेग्रहत्रयसमन्विते दुर्भिक्षादिभ
र्भयसमन्विते महारोगभयंराष्ट्रक्षयोवृष्टिविनाशनम् पंचग्रहसमायोगेदुर्भिक्षंसंकरादिकम् नृपवैरंगर्भनाशोजायतेजननाशनम् ग्र
ायोगेमंत्रिणांमरणंभवेत् पश्चश्वादिभयंसर्वसंकरादिजनक्षयः पट्टराज्ञोविनाशोवामहाभयमथापिवा सप्तग्रहसमायोगेक्षिती
...पितदानिर्मानुषंजगत् सूर्यःस्याद्यतिरिक्तश्चेत्तदायोगोमहाद्भुतः विनाचंद्रेणयोगोपिजगत्प्रलयकारणम् तद्दक्ष

र्थनाशः स्थाननाशो मानहानिर्नृपीडनम् षण्मासाभ्यंतरे वापि आयुर्हानिः स्त्रियस्तथा जन्माष्टद्वादशे राशौ चतु
र्वा पूर्वोक्तफलमेवातस्तस्याः शांतिं प्रयत्नतः कुर्याद्दोषानुसारेण वित्तशाठ्यं न कारयेत् तत्तद्ग्रहाकृतिं कृत्वा सौवर्णेन प्रयत्नतः स्वर्णस्य
पादेनापि कनीयसी ग्रहस्यैकैककलशं ग्रहयोगं प्रमाणतः कारयेत्कुंभमेकं वा निर्व्रणं सुदृढं नवम् ग्रहस्यैशानदिग्भागे शुद्धदेशे समस्थले
स्थंडिले वापि होमं कुर्याद्विधानतः तस्य पूर्वोत्तरे देशे पूर्वास्थानं प्रकल्पयेत् चतुर्हस्तं हस्तमात्रं स्थंडिलं तंडुलेन तु लिखेद्ग्रहाकृतिं तत्र स्थाप
तः अधिप्रत्यधिदेवादीन् दक्षिणोत्तरतः क्षिपेत् उक्तगंधैस्तथा पुष्पैस्तत्तन्माल्यैः फलैरपि तत्तद्ग्रहोक्तमंत्रेण पूर्वोक्तेनैव पूजयेत् ग्रह
नैवेद्यांतं समर्पयेत् ततो होमं प्रकुर्वीत स्वगृह्योक्तविधानतः चतुर्थ्यंतं प्रकुर्वीत कलशस्थापनं ततः पूर्वोक्तविधिनानेन शुद्धतोयेन
मृतं पंचगव्यं पंचत्वक्पंचपल्लवम् तत्तन्मंत्रैर्विनिक्षिप्य औषधानि विनिक्षिपेत् तत्तद्ग्रहोक्तविधिना मूलान्यादाय निक्षिपेत् मूला
अब्लिंगैर्वारुणैर्वापि कलशं पूरयेद्गुरुः तत्तद्ग्रहोक्तविधिना तत्तन्मंत्रैर्हुनेदथ चर्वाज्ये जुहुयात्सम्यक् तिलाहुतिमथाचरेत् अथ स्विष्टकृतं हु
शेषं समापयेत् भद्रासनोपविष्टस्य यजमानस्य ऋत्विजः कलशस्थोदकेनैव मभिषेकं समाचरेत् योगग्रहोक्तमंत्रैश्च अधिप्रत्यधिमंत्रै
वग्रहोक्तमंत्रैश्च जातवेदादिपंचकैः योगग्रहोक्तमंत्रा आकृष्णेत्यादयः नवग्रहोक्तमंत्रास्तत्तद्ग्रहशांतिप्रकरणोक्ताः आदिदेवनमस्तुभ्यमित्यादय
त्र्यंबकेन मंत्रेण क्षेत्रस्य पतिना अपि यत इंद्रभयेनैव लोकपालाष्टकैरपि सुरास्त्वामभिषिंचंतु मंत्रेण येन देवादयः क्रमात् अन्यैश्च पुण्यसूक्तैश्च अभिषे

समाचरेत् अभिषेकप्लुतंवस्त्रमाचार्यायनिवेदयेत् ततः शुक्लांबरधरः कुर्यादाज्यावलोकनम् ऋत्विग्भ्योदक्षिणांदद्याद्धेनुशंखादिकानपि त-
दभावेयथाशक्तिहिरण्यमपिदापयेत् ब्राह्मणान्भोजयेत्पश्चाद्यथाविभवसारतः इतिदिनकरभट्टकृतेशांतिसारेग्रहयोगशांतिः अथगुरुप्र-
मदनरत्नेस्कांदे कन्याविवाहकालेतुशुद्धिर्यस्यानविद्यते ब्राह्मणस्योपनयनेयस्यस्याद्दुःस्थितागतः दुःस्थितंमासः एभिःपूजागुरोःकु-
विधिवद्भक्तिभावितैः मदंतीकामपुष्पाणिपत्रंपालाशसर्षपाः मदंतीयूथिकाकामोदमनवृक्षः गुडूचीचाप्यपामार्गविडंगंशंखिनीवचा
णुक्रांतासर्वौषध्यः शतावरी कुष्टंमांसीहरिद्रेद्वेशुराशैलेयचंदनम् वेचाकचोरमुस्तंचसर्वौषध्यः प्रकीर्तिताः तथैवाश्वत्थभंगश्च
ा नूतनंसोदकुंभंचपीतवस्त्रसमन्वितम् पंचरत्नैःसमायुक्तमीशान्यांस्थाप्यचानलात् याओषधीतिमंत्रेणसर्वास्त्वस्मिन्विनि-
ोपरिभागेतुस्थापयित्वाबृहस्पतिम् सुवर्णपात्रेसौवर्णींप्रतिमांतुयुधिष्ठिर कारयेत्तुयथाशक्ति वित्तशाठ्यविवर्जितः पीतवस्त्रयु-
तयज्ञोपवीतिनम् पूजयेद्गंधपुष्पाद्यैस्ततोहोमंसमाचरेत् समिधोश्वत्थवृक्षस्यहोम्याअष्टोत्तरशतम् तिलव्रीहियवाज्यंचहोतव्यंच
म् बृहस्पतेतिमंत्रेणऋषिछंदःसमन्वितम् ततोहोमावसानेतुपूजयेच्चबृहस्पतिम् पीतगंधैस्तथापुष्पैर्धूपैर्दीपैश्चभक्तितः दध्योदनंचनै-
बलसंयुतम् नमस्तेंगिरसानाथवाक्पतेचबृहस्पते क्रूरग्रहैःपीडितानाममृतायनमोनमः पूजयित्वासुराचार्यपश्चादर्घ्यंनिवेदयेत्
ग्निप्रभो नमस्तेवाक्पतेशांतगृहाणार्घ्यंबृहस्पते अर्घ्यंदत्वासुरेशायजपहोमंसमर्पयेत् भक्त्यायत्तेसुराचार्यं

...गृहाणशांत्यर्थंबृहस्पतेनमोनमः मंत्रेणानेनसंकल्प्यपश्चात्संप्रार्थयेन्नृप जीवोबृहस्पतिःसूरिराचार्योगुरुरंगिराः वा
तेर्देवमंत्रीशुभंकुर्यात्सदामम सर्वोपचारसंयुक्तांप्रतिमांतांयुधिष्ठिर प्रणम्यचगवायुक्तामाचार्यायनिवेदयेत् अथाचार्यस्तुनियतोवेद
पारगः यजमानंसपत्नीकंशांतचित्तंजितेंद्रियम् कुंभोदकंगृहीत्वातुमंत्रैरेतैःप्रसिंचयेत् इदमापोथमंत्रेणतामभिमित्यृचातथा याओष
धीकूष्मांडैश्चाभिषेचयेत् पश्चात्संभोजयेद्विप्रान्यथाशक्ति युधिष्ठिर संक्रांतावपिकौंतेयतथास्वाभ्युदयेषुच कुर्वन्बृहस्पतेःपूजा
माप्नुयात् संक्रांतौगुरुसंक्रांतौ इतिगुरुपूजाविधिः अथप्रतिकूलादिशांतिः स्मृतिचंद्रिकायांभृगुः वाग्दानानंतरंयत्रकुलयोःकस्य
द्वोद्वाहोनैवकार्यःकृतोवैधव्यमाप्नुयात् कुलयोर्वधूवरकुलयोरित्यर्थः शौनकः पितापितामहश्चैवमाताचैवपितामही पितृव्य
भगिनीचविवाहिता एभिरत्रविपन्नैश्चप्रतिकूलंबुधैःस्मृतम् अन्यैरपिविपन्नैस्तुकेचिदूचुर्नतद्भवेत् एतच्चत्रिपुरुषोपलक्षणम् पु
तंप्रतिकूलंस्वगोत्रिणाम् प्रवेशनिर्गमस्तद्वत्तथामंडनमुंडने प्रेतकर्माण्यनिर्वर्त्यचरेन्नाभ्युदयक्रियाम् आचतुर्थंततःपुंसिपंचमेशुभदे
मेधातिथिवाक्येनोपसंहारात् वधूवरयोःपितरमादायपुरुषत्रयपर्यंतमित्यर्थः अन्यथाआचतुर्थादित्यस्यपंचमइत्यस्यचासंगत्यापत्तेः प्र
लकृतश्चदोषोवर्षावधिरेव तथाचमेधातिथिः वाग्दानानंतरंयत्रकुलयोःकस्यचिन्मृतिः तदासंवत्सरादूर्ध्वंविवाहःशुभदोभवेत् संकटेतुम
सोन्तरंशांतिंकृत्वाविवाहःकार्यः प्रतिकूलेपिकर्तव्योविवाहोमासतःपरः शांतिंविधायगांदत्वावाग्दानादिचरेत्पुनरितिज्योतिःप्रकाशवचना

वाग्दानादीत्यतद्गुणसंविज्ञानोबहुव्रीहिः वाग्दानस्यपूर्वंकृतत्वेनावृत्त्ययोगात् इतिकेचित् पुनः पदेनावृत्त्युक्तेरदृष्टार्थपुनर्वाग्दानमितिगागाभट्टी
यः पंथाः शांतिंविनायकशांतिं संकटेसमनुप्राप्तेयाज्ञवल्क्येनयोगिना शांतिरुक्तागणेशस्यकृत्वातांशुभमाचरेदितिमेधातिथ्युक्तेः अथ
दीश्राद्धोत्तरंसंस्कार्यमातूरजोदर्शनेशांतिः माधवीये प्रारंभात्प्राग्विवाहस्यमातायदिरजस्वला निवृत्तिस्तेनकर्तव्यासहत्वश्रुतिचो
प्रारंभोत्तरंरजोदर्शनेनकर्मनिषेधइत्यर्थः प्रारंभश्चनांदीश्राद्धम् प्रारंभोवरणंयज्ञेसंकल्पोव्रतसत्रयोः नांदीश्राद्धंविवाहादौश्राद्धेपाकप
वचनात् मेधातिथिः चौलेचव्रतबंधेचविवाहेयज्ञकर्मणि भार्यारजस्वलायस्यप्रायस्तस्यनशोभनम् वधूवरान्यतमयोर्जननीचेद्रजः
शुद्धेः परंकार्यंमांगल्यंमनुरब्रवीत् संकटेतुशुद्धेः पूर्वमपिश्रियंसंपूज्यमंगलंकार्यम् अलाभेसुमुहूर्तस्यरजोदर्शेह्युपस्थिते श्रियंसंपूज्य
मंगलमाचरेत् हैमींपद्मांमाषमितांश्रीसूक्तविधिनार्चयेत् मत्यूचंपायसंहुत्वागांचदद्यात्पयस्विनीम् चूडोपनयनोद्वाहप्रतिष्ठादि
तिवाक्यसारवचनात् संग्रहेतुप्रकारांतरमुक्तम् संकटेसमनुप्राप्तेसूतकेसमुपागते कूष्मांडीभिर्घृतंहुत्वागांचदद्यात्पयस्विनीम्
नयनोद्वाहप्रतिष्ठादिकमाचरेत् संकटेसूतकेइत्यर्थः इतिशांतिसारेप्रतिकूलादिशांतिः अथप्रतिशुक्रादिशांतिः तत्रैवमात्स्ये अथा
भूपालप्रतिशुक्रप्रशांतये यात्रारंभेवसानेचतथाशुक्रोदयेसति शुक्रपूजाप्रकर्तव्यानांनिशामयभारत राजतेवाथसौवर्णेकांस्यपात्रेथवा
...तंडुलपूरिते निधायराजतंशुक्रंशुक्लचिमुक्ताफलान्वितम् महाश्वेतंगवायुक्तंसामगायनिवेदयेत् नमस्तेसर्वलोके

...र्थासेद्धमर्थंगृहाणार्घ्यंनमोस्तुते दत्वैवमर्घ्यंकौंतेयप्रणिपत्यविसर्जयेत् एवंशुक्रोदयेकुर्याद्यात्रादिषुचभारत तद्धा
नःपूजांप्रवक्ष्यामियुधिष्ठिर सौवर्णपात्रेसौवर्णममरेशपुरोहितम् पीतपुष्पांबरधरंकृत्वास्नात्वाथसर्षपैः पालाशाश्वत्थभंगेनपंचगव्यंति
भंगःपल्लवः पीतांगरागवस्त्रोघृतहोमंतुकारयेत् प्रणम्यचगवासार्द्धंब्राह्मणायनिवेदयेत् नमस्तेंगिरसांनाथवाक्पतेथबृहस्पते क्रू
डितानाममृतायनमोनमः संक्रांतावपिकौंतेययात्रास्वभ्युदयेषुच कुर्वन्बृहस्पतेःपूजांसर्वान्कामान्समश्नुते अथवामौक्तिक
नानिबृहंतिच भार्गवांगिरसौचिंत्यतान्येवप्रतिपादयेत् इतिशांतिसारेप्रतिशुक्रादिशांतिः अथग्रहणशांतिर्मात्स्ये यस्यराशि
विद्ग्रहणसंभवः स्नानंतस्यप्रवक्ष्यामिमंत्रौषधिसमन्वितम् चंद्रोपरागंसंप्राप्यकृत्वाब्राह्मणवाचनम् संपूज्यचतुरोविप्रान्शुक्ल
पैनैः पूर्वमेवोपरागस्यसमानीयौषधादिकम् स्थापयेच्चतुरःकुंभानव्रतःसागरानिति गजाश्वरथ्यावल्मीकसंगमान्ह्रदगोकुल
रमदेशाच्चमृदमानीयनिक्षिपेत् पंचगव्यंपंचरत्नंपंचत्वक्पंचपल्लवम् रोचनंपद्मकंशंखंकुंकुमंरक्तचंदनम् शंखस्फटिकतीर्थांबुनि
गुग्गुलान् मधुकंदेवदारुंचविष्णुक्रांताशतावरीम् बालांचसहदेवींचनिशाद्वितयमेवच एतत्सर्वंविनिक्षिप्यकुंभेष्वावाहयेत्सुरान्
समुद्राःसरितस्तीर्थानिजलदानदाः आयांतुयजमानस्यदुरितक्षयकारकाः योसौवज्रधरोदेवआदित्यानांप्रभुर्मतः सहस्रनयनश्चेंद्रो
ग्रहपीडांव्यपोहतु यःकर्मसाक्षीलोकानांधर्मोमहिषवाहनः ममचंद्रोपरागोत्थांग्रहपीडांव्यपोहतु मुखंयःसर्वदेवानांसप्तार्चिरमितद्युतिः

द्रोपरागसंभूतामग्निःपीडांव्यपोहतु रक्षोगणाधिपःसाक्षान्नीलांजनसमःप्रभुः खड्गहस्तोतिभीमश्चग्रहपीडां॰ नागपाशधरोदेवःसदामक
वाहनः सजलाधिपतिर्देवोग्रह॰ प्राणरूपोहिलोकानांसदाकृष्णमृगप्रियः वायुश्चंद्रोपरागोत्थांग्रह॰ योसौनिधिपतिर्देवः खड्गशूलगदाधरः
द्रोपरागकलुषंधनदोत्रव्यपोहतु योसाविंदुधरोदेवःपिनाकीवृषवाहनः चंद्रोपरागपापानिसनाशयतुशंकरः त्रैलोक्येयानिभूतानि
राणिचराणिच ब्रह्मविष्ण्वर्करुद्राश्चदहंतुममपातकम् एवमावाहयेद्देवान्मंत्रैरेभिश्चवारुणैः एतानेवतथामंत्रान्स्वर्णपट्टेवि
मम्रपट्टेथवालिख्यनववस्त्रेतथैवच मस्तके यजमानस्यनिदध्युस्तेद्विजोत्तमाः कलशान्द्रव्यसंयुक्तान्नानारूपसमन्वितान्
मेंद्रूढंभद्रपीठोपरिस्थितम् पूर्वैरेवतुमंत्रैश्चयजमानंद्विजोत्तमाः अभिषेकंततःकुर्युर्मंत्रैर्वारुणसूक्तकैः आचार्यवरयेत्सम्य
निवेदयेत् आचार्यदक्षिणांदद्याद्गोदानंवस्त्रशक्तितः होमंचापिप्रकुर्वीततिलैर्व्रीहिभिस्तथा दानंचशक्तितोदद्याद्यदीच्छेदा
सूर्यगृहेसूर्यनामयुक्तान्मंत्रांश्चकीर्तयेत् अनेनविधिनायस्तुग्रहणेस्नानमाचरेत् नतस्यग्रहणेदोषःकदाचिदपिजायते भा
पिकायांज्योतिःसागरे सौवर्णकारयेन्नागंपलेनाथपलार्धतः तदर्धेनतदर्धेनफणायांमौक्तिकंन्यसेत् ताम्रपात्रेनिधायाथघृतपूर्णे
ः कांस्येवाकांतलोहेवान्यस्यदद्यात्सदक्षिणम् चंद्रग्रहेतुरूप्यस्यबिंबंदद्यात्सदक्षिणम् नागंरुक्ममयंसूर्यग्रहेबिंबंचहेमजम्
कांचनम् कालविवेकेऽपि स्वर्णनिर्मितंनागंसतिलंकांस्यभाजनम् सदक्षिणंसवस्त्रंचब्राह्मणायनिवेदये

...ज... ...कृत्वोस्वशक्तितः उपरागभवक्लेशच्छिदे विभायकल्पयेत् मंत्रस्त तमोमयमहाभीमसोमसूर्यविमर्दन हेमताराप्रदान
शांतिप्रदोभव विधुंतुदनमस्तुभ्यंसिंहिकानंदनाच्युत दानेनानेननागस्यरक्षमावेधजाद्भयात् मदनरत्नेतुस्नानमात्रमुक्तम् दूर्वांकुरो
मीशिलाजित्सर्वार्थसर्वौषधिपंचमृद्भिः स्नानंविदध्याद्ग्रहणेरवींद्वोः पीडाकरेशांतिवद्दंद्वियस्य अद्भुतसागरेभार्गवः यस्यराज्यस्यन
र्भानुरुपरज्यते राज्यभंगंसुहृन्नाशंमरणंचात्रनिर्दिशेत् इतिदिनकरभट्टकृतेशांतिसारेग्रहणशांतिः अथविनायकशांतिः अत्र
र्येवैश्यैः शूद्रैश्चसिद्धिकामुकैः कर्मनिर्विघ्नसिद्ध्यर्थंसुपूज्यस्तुगजानन इतिलैंगात् यजमानस्तुशूद्रश्चेद्द्विजैस्तांनियोजयेत् इ
शूद्रस्याप्यधिकारः याज्ञवल्क्यः विनायकःकर्मविघ्नसिद्ध्यर्थेविनियोजितः गणानामाधिपत्येचरुद्रेणब्रह्मणातथा कर्मण
सिद्ध्यर्थेचेत्यर्थः तेनोपसृष्टोयस्तस्यलक्षणानिनिबोधत स्वप्नेवगाहतेत्यर्थंजलंमुंडांश्चपश्यति काषायवाससश्चैवक्रव्यादांश्च
अंत्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठते व्रजन्नपितथात्मानंमन्यतेनुगतंपरैः स्वप्नइतिसर्वत्रसंबध्यते भविष्ये तैलार्द्रगात्रंविधुरंक
भूषितम् एवंस्वप्नानुक्त्वाप्रत्यक्षदर्शनान्याह याज्ञवल्क्यः विमनाविफलारंभःसंसीदत्यनिमित्ततः तेनोपसृष्टोलभतेनराज्यंराजन
कुमारीनचभर्त्तारमपत्यंगर्भमंगना आचार्यत्वंश्रोत्रियश्चनशिष्योध्ययनंतथा वणिग्लाभंनचाप्नोतिकृषिंचापिकृषीवलः स्नपनंतस्य
र्तव्यंपुण्येह्निविधिपूर्वकम् तस्य विनायकोपसृष्टस्यपुण्येह्नियस्मिन्कस्मिंश्चित् यत्तु शुक्लपक्षेचतुर्थ्यांचवारेणधिषणस्यच तिष्येचवे

रनक्षत्रेतस्यैवपुरतोनृपेत्यपरार्के भविष्येतच्छ्रीकामस्नपनपरम् धिषणस्यगुरोः तस्यविनायकस्य तत्रादौदेवतापूजोक्तापरार्के भविष्ये व्यो
केशंतुसंपूज्यपार्वतींभीमजंतथा कृष्णस्यपितरंतातअर्कमारंसितंतथा धिषणंक्लेदपुत्रंच कोणंलक्ष्मचभारत विधुंतुदंबाहुलेयंनंदकस्य
धारणम् व्योमकेशः शिवः भीमजोगणेशः आरोभौमः सितः शुक्रः क्लेदपुत्रोबुधः कोणः शनैश्चरः लक्ष्मस्तद्वांश्चंद्रः बाहुलेयःस्कंदः
ल्यः गौरसर्षपकल्केनसाज्येनोत्सादितस्यच सर्वौषधैः सर्वगंधैर्विलिप्तशिरसस्तथा भद्रासनोपविष्टस्यस्वस्तिवाच्याद्विजाःशुभा
स्यउद्वर्तितांगस्य सर्वौषधानिमात्स्ये सहदेवीवचाव्याघ्री बलाचातिबलातथा शंखपुष्पीतथासिंही अष्टमीतुरूवर्तुला महौष
हास्नानेषुयोजयेत् महार्णवेलन्यान्युक्तानि मुरामांसीवचाकुष्ठंशैलेयंरजनीद्वयम् शठचंपकमुस्ताच सर्वौषधिगणःस्मृतः य
श्वस्थानाद्गजस्थानाद्वल्मीकात्संगमात्ह्रदात् मृत्तिकांरोचनगंधंगुग्गुलंचविनिक्षिपेत् या आहृताह्येकवर्णैश्चतुर्भिः कलशै
शैराहृतास्वप्सुक्षिपेदित्यर्थः अत्रविशेषोवैजवापगृह्ये चतुःप्रस्रवणेभ्यश्चकुंभानाहृत्यतेषुसर्वौषधिसर्वगंधान्हिरण्यव्रीहि
मृदमारवूलकरमिति प्रक्षिपेदितिशेषः याज्ञवल्क्यः चर्मण्यानडुहेरक्तेस्थाप्यभद्रासनंततः सहस्राक्षंशतधारमृषिभिः पावनंकृत
चामभिषिंचामिपावमान्यःपुनंतुते भगंतेवरुणोराजाभगमिंद्रोबृहस्पतिः भगमिंद्रश्चवायुश्चभगंसप्तर्षयोददुः यत्तेकेशेषुदौर्भाग्य
... केशयोरक्ष्णोरापस्तन्घ्नंतुसर्वदा पूर्वादिकलशान्येएकैकोमंत्रश्चतुर्थेमंत्रत्रयमितिविज्ञानेश्वरः सर्वकलशेषु

...र्वाविनिगमकाभावात् स्नातस्यसार्षपंतैलंस्रुवेणौदुंबरेणतु जुहुयान्मूर्द्धनिकुशान्सव्येनपरिगृह्यच मितश्चसंमितः
...शालकटंकटौ कूष्मांडोराजपुत्रश्चेत्स्यंतेस्वाहासमन्वितैः अपरार्केतुशालकटंकटः कूष्मांडोराजपुत्रश्चेतिपाठः मूर्धनिहोमः नामभिर्बलि
नमस्कारसमन्वितैः पूर्वोक्तषण्णामभिस्तैलंहुत्वाचरुशेषेणेंद्रादिनामभिर्बलिंदद्यात् इतिविज्ञानेश्वरः अपरार्केतुपूर्वोक्तचतुर्नामभिस्तै
नैरेवनामभिः कृताकृतादिबलिर्देयः चरुहोमस्तुनास्त्येवेत्युक्तम् दद्याच्चतुष्पथेशूर्पेकुशानास्तीर्यसर्वतः कृताकृतांस्तंडुलांश्च
...वच मत्स्यान्पक्वांस्तथाचांगान्मांसमेतावदेवतु मांसंमत्स्यभिन्नम् एतावदितिपक्वमपक्वंचेत्यर्थः तिलपिष्टमिश्रओदनःपलं...
...नंस्रुगंधंनस्रुरांचत्रिविधामपि मूलकंपूरिकापूपांस्तथैवोंडेरकस्रजः दध्यन्नंपायसंचैवगुडमिश्रंसमोदकम् ब्राह्मणेःकापिस्रु...
...यवैश्याभ्यांतुपैष्टीनग्राह्येत्यत्रमूलंमृग्यम् मूलकंप्रसिद्धंग्राह्यमितिमहार्णवे तदाकारःपिष्टविकारइतिविज्ञानेश्वरः उंडेरकस्रज...
इत्यपरार्कः महार्णवेतुवर्तुलेश्चतुरस्रेश्चदीर्घैःपिष्टविकारकैः निर्मितास्रजउच्यतेउंडेरकसमाख्ययेत्युक्तम् गुडमिश्रंपिष्टमित्य...
कालड्डुकाः वृद्धतुपराशरेणकुल्माषाःफलानिचेत्यधिकमुक्तम् एतत्सर्वमेकस्मिन्शूर्पेनिधायसकृन्निवेदयेदित्यर्थः एतान्सर्वानुप...
भूमौकृत्वाततःशिरः विनायकस्यजननीमुपतिष्ठेत्ततोंबिकाम् दूर्वासर्षपपुष्पाणांदत्वार्घ्यंपूर्णमंजलिम् दूर्वादिपूर्णमंजलिंसजलंविनायक...
योंबिकायैचार्घ्यंदत्वोपतिष्ठेदित्यर्थः रूपंदेहियशोदेहिभगंभगवतिदेहिमे पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे विनायकोपस्थाने

गवन्नित्यूह इतिविज्ञानेश्वरः ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः ब्राह्मणान् भोजयेत्पश्चाद्वस्त्रयुग्मंगुरोरपि एवंविनायकंपूज्य ग्रहांश्चैव वि
धानतः कर्मणांफलमाप्नोतिश्रियंप्राप्नोत्यनुत्तमाम् आगमेतुविनायकांबिकयोः पीठविशेषउक्तः आदौषट्कोणकंकृत्वापद्ममष्टदलंततः
सरैः शोभितंतच्चचतुरस्रंततोभवेत् आसनंकल्पयित्वातुप्रणवेनयथाविधि कर्णिकायांन्यसेद्देवंगणेशंचांबिकांतथा आदित्यंचतथान्
ब्रह्मविष्णुमहेश्वरान् न्यसेन्तत्पीठमध्येचषट्पत्रेषुमितादिकान् मातृश्चकेसराग्रेषुपूर्वादिषुप्रपूजयेत् ततश्चाष्टदलेपद्मेपूजयेद्
कौमारंपूर्वदिग्भागेआग्नेय्यांचकुमारकम् दक्षिणेश्वेतमित्युक्तंनैर्ऋत्येकौशिकंतथा अपस्मारंवारुणेचविशारवंवायुगोः
न्यसेत्स्कंदमीशपत्रेप्रमेयकम् पूर्वादिपद्मपत्रेचसोमादींश्चग्रहान्न्यसेत् ततः इंद्राग्नीपूर्वपत्रेचआग्नेय्यांचकुमारिका ब्रह्
वचवाराहीनैर्ऋतेतथा वैष्णवीपश्चिमेपूज्याचामुंडावायवेतथा मातरश्चोत्तरेपूज्याईशकोणेमहेश्वरी इंद्राद्यष्टौलोकपालान् पूर्वा
न्यसेत् शचीस्वाहाचवाराहीखड्गिनीवारुणीतथा मृगारूढाचकौमारीशूलिनीचतथाऽष्टमी वज्रंशक्तिंदंडखड्गपाशांकुशगद
शूलंलोकपालानामायुधानिक्रमाल्लिखेत् ऐरावतंतथामेषंमहिषंप्रेतसंज्ञकम् मकरंचमृगंचैवनरंचवृषभंतथा ऐरावतः पुंडरीक
कुमुदोंजनः पुष्पदंतः सार्वभौमः सुप्रतीकश्चदिग्गजाः ओंकारादिनमोंतैश्चपूजनीयाः प्रयत्नतः पीतवस्त्रयुगच्छन्नंकलशंजल
...सहिरण्यंफलान्वितम् गणानांत्वेतिमंत्रेणसहस्रंचाष्टसंयुतमिति भद्रासनार्थाष्टदलेदेवतावाहनमप्युक्तं तं

[illegible] पूर्वपत्रे प्रमेयकम् दक्षिणस्यां विशारवं च पश्चिमे यक्षभैरवम् उत्तरे राजपुत्रं तु ईशाने जृंभकं तथा आग्नेय्यां यज्ञविदे[illegible]
पाक्षं च नैर्ऋते वायव्ये षु च संस्थाप्य सूर्यकोटरमेव चेति बलिदाने विशेषस्तत्रैव चतुष्पथं गत्वा चतुर्विंशतिदेवेभ्यो बलिं दद्याद्यथाविधि
मुख्यश्च तथा श्येनस्त्र्यंबको यक्ष एव च कूष्मांडो भैरवश्चेति पूर्वस्यां दिशि संस्थिताः बलिं गृह्णंतु ते सर्वे मया दत्तं यथाविधि विना[illegible]
ष्मांडो राजपुत्रस्तथैव च यज्ञविक्षेपकश्चैव कुलंगायैनमो नमः अपामारी दक्षिणस्यां पूजनीया प्रयत्नतः शूर्पकेशी भूर्पक्रोडी है[illegible]
[illegible]कः विरूपाक्षो लोहिताक्षः पश्चिमस्यां दिशि स्थिताः उत्तरस्यां प्रवक्ष्यामि देवता मुनिसत्तम विनायकः क्षेत्रपालो वैश्रवणस्तत[illegible]
[illegible]नेनो महादेवो महाराजः स्वकीर्तिताः एतेषां पूजनं कृत्वा बलिदानं ततः परमिति अथ मिताक्षरानुसारेण प्रयोगः शुभे दिने विना[illegible]
[illegible]त्यर्थं कर्मफलसिद्ध्यर्थं वा लक्ष्मीप्राप्त्यर्थं विनायकशांतिं करिष्ये इति संकल्पयेत् केचित् वृद्धिश्राद्धमिच्छंति ततः आचार्यं चतुर[illegible]
णीत पराशरमते ष्टौ ततः आचार्यो गोमयोपलिप्ते देशे पंचवर्णैर्भद्रासनार्थमेकं स्वस्तिकं कृत्वा तस्य पूर्वादिदिक्षु चतुरः स्वस्तिकान्[illegible]
कारयित्वा मध्यस्वस्तिके रक्तमानडुहं चर्मोत्तरलोम प्राचीनग्रीवं संस्थाप्य तस्योपरि श्रीपर्णीपीठं संस्थाप्य श्वेतवस्त्रेणाच्छादयेत् ततो[illegible]
श्चतुर्दिक्षु स्वस्तिकेषु चतुरः कलशांश्चंदनचर्चितान् स्रक्दामवेष्टित कंठान् अव्राहत वस्त्रभूषितान् धान्यराशौ निधाय ह्रदोदकेन नदीसंगमोद[illegible]
वापूर्य उद्धृतासि वराहेण कृष्णेन शतबाहुना मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतमिति कुंभेषु पंचमृदः प्रक्षिप्य गंधद्वारामिति चंदनागरुकस्तू[illegible]

कर्पूरादीन् गंधान् गोरोचनांगुग्गुलंचाक्षिप्याश्वत्थेचइति पंचस हकारादि पल्लवान्निक्षिप्य पूर्णपात्रनिधानांते कलशस्य मुखेदेवदानव इत्या
ठित्वा कुंभेषु त्वन्नो अग्नेवरुणस्येति वरुणमावाह्य षोडशोपचारपूजांपंचोपचार पूजांवानिर्वर्त्यापोनो भद्रा इत्यादिकांशन्नोवातःपवतामित्यादिकां
अन्यांवास्वशाखापठितांशांतिंपठेयुः केचित्तु ऐशान्येपंचमोरुद्रकलशः पूर्वकुंभेश्रीसूक्तं दक्षिणेमहिम्नाणामिति सूक्तंपश्चिमेनहितेक्षत्रमिति
उत्तरे वामदेव्यंपश्चिमेरुद्रसूक्तानीतिजपमाहुः आचार्योभद्रासनस्योत्तरभागे ऐशान्यांवाविनायकं तज्जननीमंबिकांचपीठादिस्थापि
पूजयेत् तत्रमंत्रौ एकदंतायविद्महेवक्रतुंडायधीमहि तन्नोदंती प्रचोदयात् सुभगायैविद्महेकाममालिन्यधीमहि तन्नोगौरी प्रचो
तत्रैव व्योमकेशम् पार्वतीम् भीमजम् वस्कदेवम् अर्कम् मंगलम् शुक्रम् बृहस्पतिम् बुधम् शनैश्चरम् चंद्रम् राहुम् स्कंदम्
संपूज्य गृह्योक्तविधिनाप्रतिष्ठाप्यान्वादध्यात् अन्नप्रधानम् मितम् संमितम् शालम् कंटकम् कूष्मांडम् राजपुत्रंचैकैकयाचर्वाहु
श्रपयेत् यजमानो गवाज्यलोलीकृतेन गौरसर्षपकल्केनोद्वर्तितांगः सर्वौषधचूर्णैश्चंदनागरुकस्तूरिकादिभिश्च लिप्ताशिराभद्रास
स्वगृह्योक्तमार्गेणस्वस्तिवाचनंकुर्वीत ततआचार्योजीवत्पतिपुत्राभिः स्त्रीभिः कृतमंगलंयजमानमभिषिंचेत् पूर्वकलशमादाय
शतधारमृषिभिःपावनंकृतम् तेनत्वामभिषिंचामिपावमान्यःपुनंतुत इत्यभिषिंचेत् ततोदक्षिणंकलशमादाय भगंतेवरुणोराजाभगंसूर्य
[illegible]भगंसप्तर्षयोददुरित्यनेन ततःपश्चिमंकलशमादाय यत्तेकेशेषुदौर्भाग्यंसीमंतेयच्चमूर्द्धनि ललाटेकर्णयोरक्ष्णो

...न ततउदीच्यांकलशमादाय पूर्वोक्तैस्त्रिभिर्मंत्रैरभिषिच्यबृहत्पाराशरोक्तैरभिषिंचेत् एतद्वैपावनंस्नानंसहस्राक्ष
नम् तेनत्वांशतधारेणपावमान्यःपुनंत्विमाः शक्रादिदशदिक्पालाब्रह्मेशाः केशवादयः आपस्तेघ्नंतु दौर्भाग्यंशांतिंददतुसर्वदा स्त्वमिन्द्र
पओषधयःसंतु दुर्मित्रास्तस्मैसंतु योस्मान्द्वेष्टियंचवयंद्विष्मः समुद्रागिरयोनद्योमुनयश्चपतिव्रताः दौर्भाग्यंघ्नंतुतेसर्वेशांतिंयच्छंतु
दगुल्फोरुजंघाश्चनितंबोदरनाभिषु स्तनोरोबाहुहस्ताग्रग्रीवाअंसांगसंधिषु नासाललाटकर्णभ्रूकेशांतेषुचयत्स्थितम् तदापोघ्नंतु
तिंयच्छंतुसर्वदा एवमभिषिच्ययजमानस्यपश्चात्तिष्ठन्सव्यपाणिगृहीतकुशांतरितेयजमानमूर्द्धनिसार्षपतैलमौदुंबरेणस्रुवेणजुहु
ायस्वाहा ॐसंमितायस्वाहा ॐशालायस्वाहा ॐकटंकटायस्वाहा ॐकूष्मांडायस्वाहा ॐराजपुत्रायस्वाहा यजमानस्याग्
ानादिकृत्वा पूर्वोक्तैःषड्भिर्मंत्रैश्चरुंहुत्वा प्रणीताविमोकांतंकृत्वाचरुशेषेणाग्नेरभिषेकशालायांचैंद्र्यादिदिक्षुलोकपालेभ्योबलीन्दद्या
अग्नये॰ यमाय॰ निर्ऋतये॰ वरुणाय॰ वायवे॰ सोमाय॰ ईशानाय॰ ब्रह्मणे॰ अनंताय॰ अथयजमानःस्नात्वा शक्लमाल्यांबरधरोऽ
तोविनायकमंबिकांचपूर्वोक्तनद्गायत्रीभ्यांषोडशोपचारैःसंपूज्य कृताकृततंडुलतिलयुक्तौदनंपक्वापक्वमत्स्य पक्वापक्वमांसत्रिविधसुरामूलकपू
रिकोंडेरकदध्यन्नपायसगुडमिश्रपिष्टलड्डुककुल्माषफलानिपूर्वोक्तमंत्राभ्यांविनायकायांबिकायैचतमुपहारंददामीतिदत्वाशिरसाभूमिंनत्वास्त्रुकुसु
हितेनोदकेनपूर्वोक्तमंत्राभ्यामर्घ्यंदूर्वासर्षपपुष्पांजलिंचदत्वा विनायकमंबिकांचोपतिष्ठेत् रूपंदेहियशोदेहिभगंभगवन्देहिमे पुत्रान्देहि

नंदेहिसर्वान्कामांश्चदेहिमे इतिविनायकम् रूपंदेहियशोदेहि भगंभगवतिदेहिमे पुत्रान्देहिधनंदेहिसर्वान्कामांश्चदेहिमे इत्यंबिकाम् तत
शूर्पेकुशानास्तीर्योपहार शेषंतत्रनिधायचतुष्पथंगत्वातत्रमंत्रैर्बलिंदद्यात् बलिंगृह्णंत्विमेदेवाआदित्यावसवस्तथा मरुतोथाश्विनौरुद्राः सु
र्णाःपन्नगाग्रहाः असुरायातुधानाश्चपिशाचामातरोरगाः शाकिन्योयक्षवेतालायोगिन्यःपूतनाःशिवाः जृंभकाःसिद्धगंधर्वानागाविद्या
नगाः दिक्पालालोकपालाश्चयेचविघ्नविनायकाः जगतांशांतिकर्तारोब्रह्माद्याश्चमहर्षयः माविघ्नंमाचमेपापंमासंतुपरिपंथिनः सौ
साश्चभूतप्रेताःसुखावहाः ततः आचम्यगृहंगत्वाऽचार्यायवस्त्रद्वयंऋत्विग्भ्योऽन्येभ्यश्चयथाशक्तिदक्षिणांदत्वा विनायक
रपूजांकृत्वाविसृज्याचार्यायप्रतिपाद्यविभूतिंधृत्वाऽग्निंविसृज्यब्राह्मणान्भोजयेत् कर्मेश्वरार्पणंकुर्यात् इतिदिनकरभट्टकृ
विनायकशांतिः अथरुद्रविधिः ततःपुरश्चरणविधिर्हेमाद्रौ कृच्छ्रमादौस्वयंकर्तापराकंचतथापुनः स्नानईशंसमभ्यर्च्यउषित
जपेद्रुद्रांस्तथाजस्नानदंतेप्राशयेद्घृतम् अपरेह्निसंजातेसमाप्यैवंव्रतंपुनः भास्कराभिमुखोभूत्वातद्दिनेतान्जपेद्बहून् भूयश्चाह्नि
ज्यविधिवत्ततः घृताक्तैर्बिल्वपत्रैश्चरुद्रहोमंप्रकल्पयेत् एवंसम्यक्कृतेनूनंकृतोसौजायतेद्विजः साक्षाद्रुद्रोमहातेजास्ततःकामांश्च
रुद्रविनियोगस्त्रेधा जपेहोमेअभिषेकेच रुद्राणांजपहोमार्चनविधिंव्याख्यास्याम इति महार्णवेबौधायनोक्तेः किंजप्येनामृतत्वन्नै
[illegible]तेश्च जपशब्देनकेवलोजपउच्यतेइतिकेचित् अन्येतुमंत्रजपमात्रेदशांशहोमस्यांगत्वाद्दशांशादिहोमविशिष्टे

…पायनं दत्वा गुरुः एतेन होमरुद्रे तर्पणादि अभिषेकरुद्रे च ब्राह्मणभोजनं सिद्धम् जपादिरुद्रश्च पंचधा रूपं रुद्रो रुद्री महारुद्रो तिरुद्रश्चेति एव
गुणवृद्ध्या तत्ररूपं नाम नमकचमकरूपम् अन्येषां लक्षणमाह महार्णवे शातातपः षडंगैकादशी रुद्रो रुद्रैकादश रुद्रतः एकादशाभिरेताभि
द्रश्च कथ्यते एकादश महारुद्रैरतिरुद्र इतीरितः अस्यार्थः षडंगा षडंगन्याससहिता एकादशरुद्राणां समाहारः एकादशी रुद्र इत्युच्यते
लक्षणम् पंचांगरुद्राणामिति बौधायनोक्तेः तत्पाठे च प्रकारो बौधायनोक्तेः नमस्ते रुद्रमन्यव इत्येकादशानामनुवाकानामेकं जपेदि
ः सर्वनमकानुवाकान् पठित्वाद्यं चमकानुवाकं पठेत् पुनः सर्वनमकानुवाकान् पठित्वा द्वितीयं चमकानुवाकं एवमेकादशवारमिति
शिकः सद्यादि पंचवक्त्रांश्च चमकादि ततो जपेत् पुनरेव जपेत्सर्वं द्वितीयं चमकं तथा एवमेकादशगुणं क्रमेण त्वमकांस्तथा रुद्रैका
सर्वकामफलप्रदा एकादशगुणा सैव रुद्र इत्यभिधीयते रुद्र एकादशगुणो महानित्यभिधीयते महानेकादशगुणस्त्वतिरुद्र इहोच्यते
भेदात्संज्ञाविरोधो न दोषाय अथ रुद्रजपादिविधिः हेमाद्रौ बौधायनः अथातः पंचांगरुद्राणां न्यासपूर्वकं जपहोमार्चनविधिं व्याख्यास्या
द्रेति शिखायां अस्मिन्महत्यर्णव इति शिरसि सहस्राणीति ललाटे हंसः शुचिषदिति भ्रुवोर्मध्ये त्र्यंबकं यजामह इति नेत्रयोर्नमः स्रुत्यायेति कर्णयोर्म
क इति नासिकायां मवतत्येति मुखे नीलग्रीवो द्यौकंठे नमस्ते अस्त्वायुधायेति बाह्वोर्याते हेतिरित्युपबाह्वोर्ये तीर्थानीति हस्तयोः सद्योजातमिति पंचा
वाकान् पंचस्वंगुलिषु नमो वः किरिकेभ्य इति हृदये नमो गणेभ्य इति पृष्ठे नमो हिरण्यबाहव इति पार्श्वयो विज्यं धनुः कपर्दिन इति जठरे हिरण्यगर्भ इति

मो मीढुष्टमइतिकट्याम् येभूतानामधिपतयइतिगुह्ये सशिराजातवेदाइति अपाने मानोमहांतमित्यूर्वोरेषतइति जान्वोः संसृष्टजिदितिजंघयोर्विभ्
भूतमितिगुल्फयोर्येपथामितिपादयोरध्यवोचदितिकवचं नमोबिल्मिनइत्युपकवचंनमोअस्तुनीलग्रीवायेति तृतीयनेत्रं प्रमुंचधन्वनइत्यस्त्रं
तावंतश्चेतिदिग्बंधः ॐ नमोभगवतेरुद्रायेतिनमस्कारंन्यसेत् ओंकारंमूर्ध्निविन्यस्यनकारंनासिकाग्रतः मोकारंतुललाटेवैभकारंमुखम्
गकारंकंठदेशेतुवकारंहृदिविन्यसेत् तेकारंदक्षिणेहस्तेरुकारंवामतोन्यसेत् द्राकारंनाभिदेशेतुयकारंपादयोर्न्यसेत् सद्यंचपादयो
र्न्यस्योरुमध्यतः अघोरंहृदिविन्यस्यमुखेतत्पुरुषंन्यसेत् ईशानंमूर्ध्निविन्यस्य हंसोनामसदाशिवः हंसहंसेतियोब्रूयाद्धंसोनामस
न्यासविधिंकृत्वाततः संपुटमारभेत् त्रातारमिंद्रत्वन्नोअग्नेस्त्वगन्नः पथामसुन्वंतं तत्वायामि आनोनियुद्भिर्वयंसोम तमीशानमस्मे
वीत्येनत्संपुटमिंद्रादीन्दिक्षुविन्यस्यैवमेवात्मनिरोद्रीकरणंकृत्वात्वगस्थिगतैः पापैः प्रमुच्यते सर्वभूतेष्वपराजितोभवति यक्षगंध
शाचब्रह्मराक्षसयमदूतशाकिनीडाकिनीसर्पश्वापदतस्करा‌द्युपघाताद्युपद्रवाः सर्वेज्वलंतंपश्यंतुमांरक्षंतु मनोज्योतिरितिबोध्या
र्मणितेजातवेदाइतिगुह्यनाभिहृदयमुखशिरःस्वभिमंत्र्यात्मरक्षाकर्तव्याशिवसंकल्पंहृदयं पुरुषसूक्तंशिरउत्तरनारायणंशिखा अप्र
वं शतरुद्रियमस्त्रंपंचांगंसकृज्जपेदष्टांगं प्रणम्यहिरण्यगर्भोयः प्राणतोब्रह्मजज्ञानंमहीद्यौरुपश्वासयाग्नेनययाते अग्नेयथावस्वाहेत्यष्ट
[illegible] रुपंध्यायेत् शुद्धस्फटिकसंकाशंत्रिनेत्रंपंचवक्त्रकम् गंगाधरंदशभुजंसर्वाभरणभूषितम् नीलग्रीवंशशांकांकंनागय

म् ... तशर्यंच वरेण्यमभयप्रदम् कमंडल्वक्षसूत्राभ्यामन्वितं शूलपाणिनम् ज्वलंतं पिंगलजटाशिखामुद्योतकारिणम् अमृते
हृष्टमुमादेहार्धधारिणम् दिव्यसिंहासनासीनं दिव्यभोगसमन्वितम् दिग्देवतासमायुक्तं सुरासुरनमस्कृतम् नित्यंच शाश्वतं शुद्धं ध्रुवमक्षरम
सर्वव्यापिनमीशानं रुद्रं वै विश्वरूपिणम् एवंध्यात्वा द्विजः सम्यक् ततो यजनमारभेत् हंसइति ईशानंमूर्ध्निविन्यस्य हंसहंसेतिब्रूयात्
हंसोनामसदाशिवोभवतीत्यर्थः अत्र पंचांगन्यासउक्तः शिखाद्यस्त्रांतमेके त्रिंशदंगन्यासः प्रथमः मूर्धादिपादांतं दशांगन्यासो द्वितीयः
पंचांगन्यासस्तृतीयः गुह्यादिमस्तकांतं पंचांगन्यासः पंचमइति पंचांगरुद्राणामित्युपक्रमाद्बोधायनमते पंचैवन्यासाः शातातपेनतु
ः षडंगैकादशीं रुद्रइत्युक्तेः सच प्रजननादिसर्वांगपर्यंतं षोडशांगेषु कर्तव्यः बौधायनेनाभिषेकप्रकरणे तदुक्तेरितिमहार्णवः हेमाद्रौ बौ
ध्यजपहोमावित्युपक्रम्य न्यासद्वयं प्रकारांतरेणोक्तम् न्यासंभवादिभिः कुर्यान्नमोंतैः प्रणवान्वितैः भवंचपादयोर्न्यस्य शर्वंन्यस्योरुमध्य
ह्यदेशेतुनाभौपशुपतिंन्यसेत् रुद्रंचहृदयेन्यस्यमुखेचोग्रंतुविन्यसेत् भीमंललाटपट्टेच महांतं शीर्ष्णिविन्यसेत् तथैवांत्यानुवाकस्यमंत्रैः
शुचिः न्यासंकृत्वानुलोम्येन वर्जयित्वाभिचारकम् आद्यंतुपादयोर्न्यस्य द्वितीयंजानुदेशतः ऊर्वोस्तृतीयंविन्यस्य चतुर्थं गुह्यदेशतः पंचमंन
शेतुषष्ठंतुहृदयेन्यसेत् सप्तमंकंठदेशेतु मुखेचाष्टममुत्तमम् नवमंनासिकायांतु दशमंनेत्रयोर्द्वयोः एकादशंललाटेतु द्वादशंशीर्ष्णिविन्यसेत्
योदशंतुकवचं हुंकृत्वास्त्रेतुफट्ततइति अथरुद्रहोमविधिः हेमाद्रौ बौधायनः रुद्रैकादशिनीजाप्येत्रयस्त्रिंशदथाहुतीः रुद्रैशतत्रयंप्रोक्तंष

ऽधिकयायुतम् रुद्रे लघुरुद्र इत्यर्थः चत्वारश्च महारुद्रे सहस्राः सप्तवर्जिताः चत्वारिंशत्सहस्राश्च कर्तव्याश्चतुरुत्तराः ऊनाश्च सप्तसप्तत्य

ह्यतिरुद्रे विनिश्चयः होमश्च नमः शंभवेति मंत्रेणेति हेमाद्रिः तथा च तन्मते मंत्रविभागो होमे नास्ति महार्णवस्तु श्रुतिषु नानाविधमंत्रविभाग

म्नातं च येन प्रकरणस्थमप्यपेक्षितत्वाद्ग्राह्यमित्याह तत्र होमस्त्रेधा समग्रहोमो दशांशहोमः शतांशहोमश्चेति तत्राद्यः प्रधानभूतो

तश्च उत्तरौ त्वंगभूतावेवेति महार्णवः त्रिष्वपि पक्षेषु मंत्रविभागः षोढा एकधा त्रेधा षोढा षोडशधा अष्टचत्वारिंशद्धा एकोनसप्तत्

चेति तत्र त्रेधा विभागस्त्रेधा विभक्तं जुहोति तत्र इदं ये लोका इति श्रुत्योक्तः षोढा विभागोपि तिस्र उत्तरा आहुतीर्जुहोति षट्स

तवः श्रुत्योक्तः षोडशधा विभागोपि अपि वा प्रथमाद्दुपक्रम्य नमस्तक्षभ्य इति जानुदघ्ने धारयमाणो जुहोति रथकारेभ्यश्च

मः स्वायुधायेति नाभिदघ्ने शेषेण प्रागवतानेभ्य आस्यदघ्ने हुत्वा सहस्राणि सहस्रश इति दशावदानान्हुत्वा अन्वारोहान् जु

द्रेभ्यो ये पृथिव्यामिति जानुदघ्ने धारयमाणो नमो रुद्रेभ्यो येंतरिक्ष इति नाभिदघ्ने नमो रुद्रेभ्यो ये दिवीत्यास्यदघ्ने हुत्वेति बौधाय

सप्तत्युत्तरशतविभागस्तु अथैकत्वादेकं वाक्यमिति न्यायेन शाकपूण्या द्युक्तो भयतो नमस्कारत्वादिना वसिद्धः तत्र प्रथमानुवाक

इति पंचदश मंत्राः द्वितीये त्रयोदश यजूंषीति तावंतः तृतीयचतुर्थयोः प्रत्येकं सप्तदश यजूंषि पंचमषष्ठयोः प्रत्येकं यजूंषि सप्तमे

कोनविंशतिः दशमे द्वादशर्चः एकादशे दशर्चः त्रीणि च यजूंषीति एकोनसप्तत्युत्तरशतमंत्राः अस्मिंश्च पक्षे

[illegible]मानुवाकपर्यंतं नमस्कारादिनमस्कारांतं यजुरितिशाकपूणिः नमस्काराद्येकंयजुरितियास्कः महार्णवस्तु शाकपूणि
मुभयतोनमस्कारत्वं द्वितीयतृतीयचतुर्थानुवाकविषयं यास्कोक्तंच नमस्कारादित्वं पंचमादिनवमांतं यथाशिष्टाचारादित्याह अस्मिंश्च प
नांहृदयेभ्य इतिमंत्रशेषस्तदुत्तरमंत्रचतुष्टयेनुषज्यते जपादौतु विभागाभावान्नानुषंगः अष्टचत्वारिंशद्विभागस्तु अष्टानुवाका अ
तिकाशकृत्स्नोक्तेर्द्वितीयानुवाकप्रभृतिनवमांतैरनुवाकैरष्टौमंत्राः इतरानुवाकेषुत्वनंतरपक्षोक्तोमंत्रविभागइति तत्ररूपजपेदशां
रंजपाभावान् एवमेकादशिनीजपेशतांशहोमोनास्ति एकादशिनीदशांशहोमे एकेनैवरूपेण होमः अवशिष्टैकरूपस्य दशांशहोमे
तुरुद्रमहारुद्रादावप्यवशिष्टरूपस्यनास्तीतिमहार्णवः पितृचरणास्तुरूपाहुतीनांदशांशसंभवादष्टचत्वारिंशत्पक्षे पंचाहुतयः ए
शतपक्षेसप्तदशांताश्चाद्येमंत्रैस्सद्यांतैर्वा एवमेकादशिन्यादिजपेपि अवशिष्टरूपे दशांशः संभवतीत्याहुः अत्रमूलंनलब्धम् के
रूपेपूर्वोक्तवचनान्नमः शंभवमंत्रेणहोमइत्याहुः एवंमहारुद्रादावपिद्रष्टव्यम् अयंचषोढाविभागोनमकेष्वेव चमकेषुतुविभागमा
नःमहार्णवे अग्नाविष्णुसजोषसे इतिचतुर्गृहीतंहुत्वा वाजश्चमेप्रसवश्चमइतिसततांवसोर्धारांजुहोत्यामंत्रसमापनादिति आमंत्रसमापना
र्वैचमकानुवाकैरेकाहुतिरित्यर्थः तथाचसर्वनमकानुवाकहोमांते अग्नाविष्णूचैकाहुतिः अवशिष्टचमकाध्यायेनापरेत्याहुतिद्वयमितिकेचित्
न्येत्वनुवाकभेदादेव द्वितीयाद्यनुवाकेषु भेदसिद्धेः प्रथमानुवाकसमाप्तिरेवात्रोच्यते तथाचाद्यचमकानुवाके द्वे आहुती द्वितीयादिचमकानुवाके

शेत्याहुः तथाच द्वे आहुती द्वादश वा हुतय इति पक्षद्वयं सिद्धम् तृतीयोपि पक्षोर्थसिद्धो महार्णव उक्तः तथाहि नमस्ते रुद्र मन्यव इत्येकादशानामनुवा
नामेकमेवं जपेदिति बौधायनेन द्वितीयादिवदाद्यस्यापि चमकानुवाकस्य समस्तस्य जपे एकमंत्रत्वं बोधितं जपानुसारी च होमः अतः सर्वनमकानुवा
मांते समस्ताद्यचमकानुवाकेन होम एवमुत्तरेष्वप्यनुवाकेष्वित्येकादशाहुतय इति अयमेव च पक्षो मुख्यः आहुतिगणनायामस्यैव लैंगोक्तेः इद
शिष्टा द्वादशाहुतिपक्षमाश्रित्य दशाहुतिपक्षमेव कुर्वंति अथैकादशिन्यादिहोमे कुंडनिर्णयार्थं चमकद्वादशाहुतिपक्षमाश्रित्य दशांशहोमे चाव
इनित्यागमाश्रित्याहुतिसंख्योच्यते एकादशिन्यां समग्रहोमे प्रतिमंत्रपक्षे आहुतयः एकसप्तत्यधिकाष्टादशशती द्विहस्तं कुंडम् तत्रैवा
पक्षे चत्वारिंशदधिका पंचशती एकहस्तं कुंडम् लघुरुद्रे समग्रहोमे प्रतिमंत्रपक्षे विंशसाहस्री पंचशतानि एकाशीतिश्च त्रिहस्तं कुंडम्
रिंशत्पक्षे पंचसहस्राणि नवशतानि चत्वारिंशच्च द्विहस्तं कुंडम् महारुद्रे समग्रहोमे प्रतिमंत्रपक्षे लक्षद्वयं षड्विंशतिसहस्राणि त्रिशती ए
हस्तं कुंडम् तत्रैवाष्टाचत्वारिंशत्पक्षे पंचषष्टिसहस्राणि शतत्रयं चत्वारिंशत् चतुर्हस्तं कुंडम् अतिरुद्रे समग्रहोमे प्रतिमंत्रपक्षे चतुर्विंशति लक्ष
सहस्राणि एकाधिकशतत्रयं च अष्टहस्तं कुंडम् तत्रैवाष्टाचत्वारिंशत्पक्षे सप्तलक्षाणि अष्टादशसहस्राणि सप्तशती चत्वारिंशच्च षड्ढस्तं कुंड
शिनी जपदशांशहोमे प्रतिमंत्रपक्षे एकादशीद्व्यधिकशतम् एकहस्तं कुंडम् तत्रैवाष्टाचत्वारिंशत्पक्षे षष्टिः अरत्निमात्रं कुंडं लघुरुद्रे जपदशां
तिमंत्र[illegible]द्विपंचाशच्च द्विहस्तं कुंडं तत्रैवाष्टाचत्वारिंशत्पक्षे षट्शती एकहस्तं कुंडम् तत्रैवाष्टाचत्वारिंशत्पक्षे षट्सहस्राणि पंच

...कुंड अनिरुद्रजपेदशांशहोमे प्रतिमंत्रपक्षेलक्षद्वयं एकोनपंचाशत्सहस्राणिचतुर्विंशतिश्च षड्ढस्तंकुंडं तत्रैवाष्टाचत्वारिंश
कसप्ततिसहस्राणि अष्टशती अशीतिश्च चतुर्हस्तंकुंडं त्रिधाविभागादिपक्षास्तु नप्रचरंतीनितद्गणनानोक्ता एतेषांकरणरज्जुर्वाजपेय्यां वि
लमानमेककरतोयावद्दशस्युर्जिनावेदत्रीणिकुसागराः शरयवोपेताभुजंगांबुधिः निष्पादांबुधिसायकाविययवमंकेष्वर्धयुग्यामषट् नागांग
निदङ्मुनियवेनोनाश्वषट्पर्वताः रुद्रेमंडपपरिमाणमाहसएव परशुरामः मंडपोष्टगुणात्कुंडात्कुंडहोमानुसारतः अथरुद्रवेदिः तत्ररुद्र
प्रखविकृतित्वादीशानकोणेवेदिः ग्रहवेदिरपितत्रैवेतिकेचित् कुंडस्य प्रागुदीच्यांवा प्राच्यामुत्तरतोपिवा चतुरस्रंचतुर्द्वारंकर्तव्यंग्रहपी
...लोक्तेः प्राच्यामुदीच्यांवेत्यन्ये अपरेतु ग्रहवेदिरेवरुद्रवेदिः अतिरिक्ततत्सत्वेप्रमाणाभावादितिवदंति वयंतुरुद्रहोमेमंत्रहोमत्व
...थाचमंडपमध्यनवांशेतुलापुरुषवद्वेदिःकार्या कुंडंचतदीशानेतुलापुरुषवत् ग्रहवेदिस्तुकुंडादीशानादौमंडपांतर्बहिर्वा ग्रहमखव
त् नचरुद्रहोमस्यनियतंशांतिरूपत्वंयेनग्रहमखविकृतित्वंस्यात् काम्यस्यापितस्यसत्वादितिवदामः गुर्जरपरशुरामोपि तत्रैकावे
यज्ञमंडपमध्यतः मध्यस्तंभांतरंयावत्तावन्मानकरोच्छ्रयेत्याह महार्णवस्तुकुंडमंडपप्रकृतिसंख्यावसोर्द्वारादिचायुतहोमवत्कार्यमित्
थरुद्रयंत्रेवेद्युपरिवस्त्रेशिष्टाःकुर्वंतीनितदुच्यते स्कांदे प्रणम्यजगतामीशमुमादेहार्द्धधारिणम् यंत्रोद्धारमहंवक्ष्येरुद्रकल्पानुसारतः मध्येद्व
समालिख्यतन्मध्येचदशाक्षरम् बहिरष्टदलंपद्मंततः षोडशपत्रकम् चतुर्विंशतिपत्राक्षंद्वात्रिंशत्पत्रकंतथा चत्वारिंशत्पत्रकंतुवृत्तंसूर्यसमप्र

पंचपद्मात्मकं वृत्तं चतुरस्रं च भूगृहम् सत्वं रजस्तमश्चेति त्रिगुणैः परितो वृतम् चतुर्द्वारं द्वारदेशे बहिर्नागसमावृतम् रुद्रपीठमिति ख्यातं देवतास्त
विन्यसेत् चत्वारिंशच्छतं चैकं देवतानामुदाहृतम् कर्णिकामध्यदेशे तु रुद्रं पंचास्यमालिखेत् नमो भगवते रुद्रायेति तारादिकं न्यसेत् सोयंद
क्षरो मंत्रः सर्वकामार्थसिद्धिदः प्रणवादि नमोंतानि पंचास्यानि ततः परम् सद्योजातं वामदेवमघोरं तदनंतरम् ततस्तत्पुरुषं प्रोक्तमीशानं
मात् प्रधानमिदमाख्यातं प्रथमावरणे ततः दलेष्वष्टसु नंद्यादीन् पूर्वादिक्रमतो न्यसेत् पूज्यपूजकयोर्मध्ये प्राचीस्याद्यंत्रलेखने आदौ नं
णेशवृषभौ क्रमात् अनंतरं भृंगिरिटी स्कंदोमाचंडसंज्ञकाः षोडशारे ततः पद्मे द्वितीयावरणे यजेत् अनंतं च तथा सूक्ष्मं शिवं चैकपदं त
मूर्तिं च श्रीकंठं वामदेवकम् ज्येष्ठं श्रेष्ठं तथा रुद्रं कालं कलविकरणम् बलं बलविकरणं बलप्रमथनं तथा तृतीयावरणे पद्मे चतुर्विंश
गमा महिमा चैव लघिमा गरिमा तथा प्राप्तिः प्राकाम्यमीशित्वं वशित्वं चाष्टसिद्धयः ततः परं क्रमेणैव न्यसेद्ब्राह्म्यादिदेवताः ब्राह्मी मा
मारी वैष्णवी तथा वाराही चेंद्री च चामुंडा चंडिका चेति ताः क्रमात् ततोष्टस्वसितांगादीन् भैरवान्विन्यसेत्पुनः असितांगो रुरुश्चंडः क्रोधउ
कालभीषणसंहारा भैरवाश्चाष्ट कीर्तिताः द्वात्रिंशत्पत्रके पूर्वं भवाष्टकमुदाहृतम् भवः शर्वेशानपशुपतिरुग्रो ग्रभीमकाः महांश्चैवेति विख्या
ष्टौ प्रकीर्तिताः ततोनंतो वासुकिश्च तक्षकश्च कुलीरकः कर्कोटकः शंखपालः कंबलोश्वतरस्तथा ततोष्टसु न्यसेद्दैन्यं पृथुं हैहयमर्जुनम् श
[illegible] क्रमात् ततः कुलाचलानष्टौ दलेष्वष्टसु विन्यसेत् हिमवान्निषधो विंध्यो माल्यवान् पारियात्रकः मलयो हेमकूटश्च गंध

...ष्टकैः चत्वार्यावरणान्येवंपंचमावरणेततः चत्वारिंशद्दलेपद्मेपंचमावरणेन्यसेत् इंद्राद्यष्टौलोकपालानष्टस्वक्रमशोलिखेत् इंद्रमग्निंयमं
र्ऋतिंवरुणंतथा वायुंकुबेरमीशानंदलेष्वष्टसुविन्यसेत् इंद्रादिलोकपालानामष्टौशक्तीस्ततोलिखेत् शचीस्वाहाचवाराहीखड्गिनीवारुणी
गारुडाचकौबेरीशूलिनीचतथाष्टमी ततोष्टानामायुधानिवज्रादीन्यष्टसुन्यसेत् वज्रंशक्तिंदंडखड्गपाशांकुशगदाअपि त्रिशूलंलोक
पायुधानिक्रमाल्लिखेत् ततोष्टौवाहनान्येषामष्टस्वक्रमशोलिखेत् ऐरावतंतथामेषंमहिषंश्वेतसंज्ञितम् मकरंचमृगंचैवनरंचवृषभंत
योथाष्टदिग्गजास्तदनंतरम् ऐरावतःपुंडरीकोवामनःकुमुदोंजनः पुष्पदंतःसार्वभौमःसुप्रतीकश्चदिग्गजाः भूगृहांतःपुनर्लेख्य
काद्बहिः इंद्रंविन्यस्यपूर्वस्यामाग्नेय्यामग्निमेवच दक्षिणस्यांयमंचैवनैर्ऋत्यांनिर्ऋतिंतथा प्रतीच्यांवरुणंवायुंवायव्यांविन्यसे
वकौबेर्यामीशान्यामीशमालिखेत् विरूपाक्षंतुविन्यस्यआग्नेय्यामग्नियोगतः नैर्ऋत्यांनैर्ऋते योगेविश्वरूपंचविन्यसेत् वाय
चलिखेत्पशुपतिंतथा ईशान्यामूर्ध्वलिंगंचन्यसेदीशानयोगतः प्रागादिक्रमतोलेख्याःशेषाद्याभूगृहाद्बहिः विप्रवर्णंश्वेतरूपंसह
डितम् शेषंविन्यस्यपूर्वस्यांपूजयेदुपचारकैः तक्षकंवैश्यवर्णंचनीलंपंचशतैःफणैः युक्तमुत्तुंगकायंचआग्नेय्यांदिशिविन्यसेत् अनंतं
वर्णंचतथाकुंकुमवर्णकम् सहस्रफणसंयुक्तंदक्षिणस्यांप्रपूजयेत् वासुकिंक्षत्रियंपीतवर्णंसप्तशतैःफणैः युक्तमुत्तुंगकायंचनैर्ऋत्यांदि
न्यसेत् शंखपालंक्षत्रियंचपीतंसप्तशतैःफणैः युक्तमावाह्यवारुण्यांपूजयेद्गंधधूपकैः महापद्मंवैश्यवर्णंयुक्तंपंचशतैःफणैः युक्तमु

गकायंचवायव्यांदिशिपूजयेत् कंबलंभूद्रवर्णंचकृष्णांत्रिंशत्फणैर्युतम् कौबेर्यांदिशिविन्यस्यपूजयेच्चविधानतः कर्कोटकंभूद्रवर्णंश्वेतंत्रिंश
णैर्युतम् ईशान्यांदिशिविन्यस्यपूजयेद्विधिवत्ततः रुद्रपीठमिदंसर्वरुद्रकृत्येषुविश्रुतम् शंभुनास्वयमाख्यातंभक्तानुग्रहकाम्यया।
कुमागरुकर्पूरैर्भूर्जपत्रेथवापटे लिखितंपूजितंभक्त्यासर्वकामार्थसिद्धिदम् यंत्रंमंत्रमयंप्रोक्तमाख्याताद्देवतेतिच पूजनीयंप्रयत्नेन
तामयम् नाग्निचोरभयंतत्रनचराजभयंक्वचित् यत्रेदंलिखितंयंत्रंपूज्यतेविधितःसदा अथरुद्रप्रयोगः देशकालौसंकीर्त्य अमुक
श्रीपरमेश्वरप्रीत्यर्थंस्वयंब्राह्मणद्वारावामुकरुद्रजपंकरिष्ये इतिसंकल्प्य तदंगतयागणपतिपूजन पुण्याहवाचन मातृकापूजनना
ब्रह्मर्त्विक्वरणानिकृत्वादेवालयादौजपंसमाप्यभद्रंकर्णेभिरितिमंडपंप्रविश्यकृतस्यामुकजपस्यदशांशेन प्रतिमंत्रपक्षेणाष्टचत्वारिंश
द्रव्येणहोमंकरिष्य इति संकल्प्यगणेशंसंपूज्य सर्षपविकिरणादिमंडपप्रतिष्ठांतंग्रहमखवत्कृत्वाग्निंप्रतिष्ठाप्य ग्रहवेद्यांग्रहान् प्रति
स्थवस्त्रेलिखितरुद्रपीठेदेवताःस्थापयेत् तन्मध्ये ॐ नमोभगवतेरुद्राय तत्रैवदिक्षु सद्योजातः वामदेवः अघोरः तत्पुरुषः ईशानः
नंदी महाकालः गणेश्वरः वृषभः भृंगिरिटिः स्कंदः उमा चंडीश्वरः इतिप्रथमावरणम् अनंतः सूक्ष्मः शिवः एकपात् एकरुद्रः त्रिमूर्तिः श्री
मदेवः ज्येष्ठः रुद्रः कालः कलविकरणः बलः बलविकरणः बलप्रमथनः इतिद्वितीयावरणम् अणिमा महिमा लघिमा गरिमा प्राप्तिः प्राका
[illegible] माहेश्वरी कौमारी वैष्णवी वाराही इंद्राणी चामुंडा चंडिका असितांगभैरवः चंडभैरवः क्रोधभैरवः उन्मत्तभैरवः कालभै

...रधः इतितृतीयं भवः शर्वः ईशानः पशुपतिः रुद्रः उग्रः भीमः महान् अनंतः वासुकिः तक्षकः कुलीरः कर्कोटकः शंखपा
लः अश्वतरः वैन्यः पृथुः हैहयः अर्जुनः शाकुंतलेयः भरतः नलः रामः हिमवान् निषधः विंध्यः माल्यवान् परियात्रः मलयः हेमकूटः गंधमा
तिचतुर्थावरणम् इंद्रः अग्निः यमः निर्ऋतिः वरुणः वायुः कुबेरः ईशानः शची स्वाहा वाराही खड्गिनी वारुणी वायवी कौबेरी ईशा
क्तिः दंडः खड्गः पाशः अंकुशः गदा त्रिशूलं ऐरावतः मेषः महिषः प्रेतः मकरः हरिणः नरः वृषभः ऐरावतः पुंडरीकः वामनः कुमुद
ष्पदंतः सार्वभौमः सुप्रतीकः इति पंचमावरणम् पूर्वे इंद्रः आग्नेय्यामग्निर्विरूपाक्षश्च दक्षिणेयमः नैर्ऋत्यां निर्ऋतिर्विश्वरूपश्च प
वायव्यां वायुः पशुपतिश्च उत्तरे कुबेरः ईशान्यामीशानऊर्ध्वे लिंगं च पूर्वे शेषः तक्षकः अनंतः वासुकिः शंखपालः महापद्मः कंबलः क
भीममंत्रैस्तत्स्थाने आवाह्य ततः तदस्तु॰ गृहाणे॰ प्रतिष्ठाप्य संपूज्य तदीशान्यां कुंभे वरुणं संपूज्य रुद्रपूजार्थं विप्रं वृणुयात् ततो ग्रहम
भ्यो होमं कृत्वा घृताक्ततिलै रुद्रहोमं कृत्वा रुद्रपीठदेवताभ्य एकैकामाज्याहुतिं हुत्वा दिक्पालादिभ्यो रुद्राय क्षेत्रपालाय च ग्रहमखवद्बलिं द
त्वा वसोर्द्धारां च कृत्वा पूर्णपात्रविमोकादिकर्मशेषं समाप्याचार्यादिभ्यो जपहोमश्रेयो गृहीत्वाऽचार्यादिभ्यो दक्षिणां दद्यात् ततआचार्यादयो
ग्रहकलशोदकेन यजमानस्याभिषेकं कुर्युः ततो यजमानो ग्रहाणां रुद्रस्य चोत्तरपूजां कृत्वा स्वशाखोक्तमंत्रेण विसृज्याचार्याय दत्वाग्निं संपूज्य ग
गच्छेति विसृज्य मंडपमाचार्याय दत्वा ब्राह्मणान् भोजयित्वा यस्य स्मृत्या॰ प्रमादा॰ दिति जपित्वा कर्म संपूर्णतां वाचयित्वा कर्मेश्वरार्पणं कु

स्कृद्युक्तोभुंजीत इतिरुद्रपद्धतिः अथरुद्राभिषेकविधिः हेमाद्रौमहार्णवेच अथातोरुद्रस्नानार्चनविधिंव्याख्यास्यामः आदित्नएवत
र्थेस्नात्वोदेत्यशुचिः प्रयतोब्रह्मचारी शुक्लवासास्तस्यदक्षिणामत्यकुदेशेतन्मुखः स्थित्वात्मनिदेवताः स्थापयेत् प्रजननेब्रह्मातिष्ठतु पा
योर्विष्णुस्तिष्ठतु हस्तयोर्हरस्तिष्ठतु बाह्वोरिंद्रस्तिष्ठतु जठरे अग्निस्तिष्ठतु हृदयेशिवस्तिष्ठतु कंठेवसवस्तिष्ठंतु वक्रेसरस्वतीतिष्ठतु न
योर्वायुस्तिष्ठतु नयनयोः सूर्याचंद्रमसौतिष्ठेताम् कर्णयोरश्विनौदेवौतिष्ठेताम् ललाटेरुद्रास्तिष्ठंतु मूर्ध्न्यादित्यास्तिष्ठंतु पृष्ठेपिनाकी
रतः शूलीतिष्ठतु पार्श्वयोः शिवाशंकरौतिष्ठेताम् सर्वतोवायुस्तिष्ठतु ततोबहिः सर्वतोग्निर्ज्वालामालापरिवृतस्तिष्ठतु सर्वेष्वंगेषु
ष्ठंतु माꣳरक्षंतु अग्निर्वायुः सूर्यश्चंद्रमादिशआपः पृथिव्योषधिवनस्पतयइंद्रः पर्जन्यईशान आत्मापुनर्नम अग्निर्मेवाचिश्रि
मंगानिसंमृज्याथैनंगंधाक्षतधूपदीपैरात्मानंमत्याराधयेत् अराधितोमनुष्यैस्त्वंसिद्धैर्देवासुरादिभिः आवाहयामिभक्त्यात्व
महेश्वर त्र्यंबकंयजामहइत्यथैनमाराधयेत् आत्वावहंतुहरयः सचेतसः श्वेतैरश्वैः सहकेतुमद्भिः वाताजवैर्बलवद्भिर्मनोजवैरायाहि
महव्यायशर्वोमित्यावाह्यसंस्थापितेत्वावाहनम् सद्योजातंप्रपद्यामीत्यावाहनंददाति भवेभवेनातिभवेभवस्वमामितिपाद्यं भवो
इतिअब्लिंगाभिश्चस्नानं अब्लिंगाआपोहिष्ठेत्याद्याः अथाद्भिस्तर्पयति भवंदेवंतर्पयामि शर्वंदेवंतर्प० ईशानंदेवंत० पशुपतिंदे० रु
... महांतंदेवंतर्पयामीतितर्पयित्वा ज्येष्ठायनमइत्याचमनीयं श्रेष्ठायनमइतिमधुपर्कं कलविकरणायइतिपुष्पाणि

[illegible]भयायनमइतिदीपं मनोन्मनायनमइतिकालेनैवेद्यम् अथाष्टभिर्मंत्रैरष्टौपुष्पाणि भवायदेवायनमः पुष्पं
[illegible]मि शर्वायदेवाय॰ ईशानाय॰ पशुपतये॰ रुद्रायदेवाय॰ उग्रायदेवाय॰ भीमायदेवाय॰ महतेदेवाय॰ अथास्या घोरतनूरुपतिष्ठते अथै
मूर्ध्निहिरण्यकलशेनसंततांधारांनिषिंचेन्मधुनासर्पिषा पयसावेक्षुरसेन नारीकेलोदकेनचाम्ररसेनवातदलाभेउदकेनवा नमस्तेरुद्रमन
[illegible]दशानामनुवाकानामेकंजपेत्सर्वेषांपारेपुनराराधयेत् उत्तमा[illegible]धनेनतदेतद्विधानमुक्तम् तेनाभिषिक्तेनोदकेनाक्षीभ्यामित्यनु
[illegible]भिश्चापादात्संमृज्यपापक्षयार्थी व्याधिविमोचनार्थीजीवनार्थीश्रीकामः शांतिकामः पुष्टिकामस्तुष्टिकामोमोक्षार्थीचकुर्यादेवंकुर्वन्
[illegible]ति आचार्यायदक्षिणांददातिदशगाः सवत्साः स्वर्णभूषिताद्वृषभैकादशारूत्तदलाभे एकांगांदद्यादित्याह भगवान्बौधायनः यद्य
[illegible]सउक्तस्तथापिपूर्वोक्तन्यासपंचकमपिकार्यम् रुद्राणांजपहोमार्चनविधिंव्याख्यास्याम इत्युक्त्वापंचन्यासोक्तेः अर्चनमभिषेक[illegible]
[illegible]ः आत्मानंप्रतीतिस्वशरीरेणमनसापूजयेदित्यर्थः आराधितइतिमंत्रोमनसावाहने गंधादौतुत्र्यंबकमंत्रः यद्यपिमानसपूजायांनैवे[illegible]
थापिशिष्टाः कुर्वंति संस्थापितइत्यावाह्य पूजायामात्वावहंत्वित्यावाह्यसद्योजातमितिपुनरावाहयेदित्यर्थः अघोरतनूः अघोरेभ्यइत्या[illegible]
शिवोमित्यंताः सर्वेषांपंचविधरुद्राणां उत्तमेनेतिअभिषेकोत्तरंबाह्यपूजेवेत्यर्थः तदेतदितियत्नरुद्राभिषेकोविहितस्तत्रैषविधिरित्यर्थस्तेनापि
पापक्षयव्याधिविमोकाद्यर्थाभिषेकांगसंमार्जनमधिकंकुर्यादित्यर्थः त्र्यंबकमंत्रविधिस्तुमत्कृतकर्मविपाकसारेउक्तः इतिदिनकरभट्टकृत॰

शांतिसारे रुद्राभिषेचनविधिः अथप्रसंगात्पंचामृताद्यभिषेचनविधिः हेमाद्रौ स्कांदे मौनव्रते देवैस्तु वंदिताधेनुः सर्वपापप्रणाशिनी तत्क्षीर
स्नापितो देव नित्यं मे वरदो भव कामतो ऽकामतो वापि यन्मया दुष्कृतं कृतम् तत्सर्वं विलयं यातु दधिस्नानेन भो शिव रसानामुत्तमं त्वाज्यं देवानां च स
दा प्रियम् तेन त्वं स्नापितो देव निधिकांतिप्रदो भव यस्य धारणमात्रेण नृसिं यातिपितामहः मधुना स्नापितो देव नित्यं शोकहरो भव यमलोकभ
स्तः शरणं त्वां गतः शिवः खंडस्नानेन देवेश मां कुरुष्व सुखान्वितम् यस्य दर्शनमात्रेण शुद्धिः प्राणाश्च जीवनम् तेन चोत्तमतोयेन स्नातो
वं स्रग्गंधं चंदनं देव कुंकुमेन समन्वितं अर्चितो ऽसि मया भक्त्या शिवलोकप्रदो भव अक्षय्यान्बंधुपुत्रार्थान्कायं चैवाक्षि वाङ्मनः
कमक्षतैरर्चितः कुरु संतानः पारिजातश्च ये चान्ये सुरपादपाः तेषां पुष्पैर्मया देव पूजितः सुखदो भव धूपोयं गृह्यतां देव स्कंदरोगंध
सतं मे वरं देहि परत्र च शुभां गतिम् शुद्धा शुक्लांबरावर्तिराज्येन च समन्विता दीपवर्तिप्रदानेन प्रीतः स्यादीश्वरो भव सर्वमन्नप्रद
सदा प्रियम् तेन चान्नप्रदानेन सुप्रीतो वरदो भव इति श्रीमन्मीमांसकभट्टदिनकरकृते शांतिसारे पंचामृताभिषेकविधिः अथ
स्नानम् हेमाद्रौ लैंगे तुलादाने सहस्रकलशैर्वा स्नापयेत्परमेश्वरम् घृतेन केवलेनापि देवदेवमुमापतिम् पयसा वाथ दध्ना वा सर्वैर्द्र
पिवा ब्रह्मकूर्चेन वा देवं पंचगव्येन वा पुनः गायत्र्या चैव गोमूत्रं गोमयं प्रणवेन वा आप्यायस्वेति वा क्षीरं दधिक्राव्णोति वै दधि तेजोसीत्
न ... भिषिंचयेत् देवस्य त्वेति देवेशं कुशांबुकलशैर्नवैः रुद्राध्यायेन देवेशं स्नापयेत्परमेश्वरम् सहस्रकलशैः शंभोर्नाम्नां चै

...तथाथनंदिनाकथितैस्तुवा दक्षेणमखमुख्येनकीर्तितेनापिवापुनः महापूजाप्रकर्तव्यामहादेवस्यभक्तितः त
स्यते शिवार्चकायदातव्याद्दक्षिणार्द्धंगुरोस्तथा बहिःप्रयोगेपीयम् प्रयोगांगत्वाद्दक्षिणायाः अवेष्टैरिवबहिःप्रयोगे गुरोर्दक्षिणा
दिनिष्क्रांता दक्षिणांचशतंचार्द्धंतदर्धंवाप्रदापयेदितितत्रैवोक्तेः क्षीराद्यैःस्नानंसहस्रघटभिन्नम् तदुक्तंकामिके सहस्रकलशाद्यैस्तु
यपरमेश्वरम् महापूजाप्रकर्तव्याप्रभूतहविषान्विता पंचामृतैःपंचगव्यैःक्षीराद्यैःस्नपनंतथा लक्षघटस्नानेत्विदंशतगुणम् कर्म
रघ्नसहस्रकलशस्नानेप्येवमेवविधिर्ज्ञेयः इतिदिनकरभट्टकृतेशांतिसारेसहस्रघटस्नानम् अथमहास्नानम् हेमाद्रौशिव
तिलतैलेनकरयंत्रोद्भवेनच शिवाभिषेकंकुरुतेसशैवंपदमाप्नुयात् मानंतत्रैवोक्तम् स्नानंपलशतंज्ञेयमभ्यंगःपंचविंशतिः प
तुमहास्नानंप्रकीर्तितम् इदंतैलंपरम् लैंगे महास्नानंचयःकुर्याद्घृतेनमधुनाततः सयातिममसायुज्यंस्थानेष्वेतेषुसुव्रत स्ना
यंचगव्यैनैवघृतेनवा विशोध्यसर्वद्रव्यैस्तुतोयेनाप्यभिषेचयेत् महास्नानेप्रसक्तेतुस्नानमष्टगुणंस्मृतम् जलेनकेवलेनैवगंधतो
क्तितः अनुलिंपेच्चतत्सर्वंपंचविंशत्पलेनवै शमीपत्रंचविधिनाबिल्वपत्रंचचंपकम् त्याज्यानिचापवित्राणिबिल्वपत्रंतुनत्यजेत् दशद्रोणैस्तु
धमष्टद्रोणैस्थापिवा शतद्रोणसमंपुण्यमाढकेनविधीयते वित्तहीनस्यमर्त्यस्यनात्रकार्याविचारणा भेरीमृदंगमुरजवादित्रैःपटहादि
भिः वादित्रैर्विविधैश्चान्यैर्मंगलैर्विविधैस्तथा जागरंकारयेत्तत्रप्रार्थयेच्चयथाक्रमम् स्वभृत्यैःपुत्रदारैश्चतथासंबंधिबांधवैः सार्द्धंप्रद

॥ क्षिणंकृत्वाप्रार्थयेल्लिंगमीश्वरम् इत्युक्त्वाचैवरुद्रंच त्वरितंशांतिमेवच मंत्रयित्वामहाबीजंतथापंचाक्षरस्यवै इतिदिनकरभट्टकृतेशां
र्तिसारेमहास्नानम् अथमहापूजा कालिकापुराणे कार्तिक्यामथवैशाख्यामयनादिषुपर्वसु दत्वादीपान्समुद्बोध्यदेवस्याग्रेबलिंततः भ
क्तानांदेवदेवस्यबाह्यादिषुभवेत्सुधीः सद्व्रतीदेवमामंत्र्यस्वपेद्भूमौहरिंस्मरेत् उपलिप्यगृहंगत्वानिराहारोनिशिस्वपेत् अपरेह्निमहास्न
नंहरायविधिनाशृणु पंचविंशत्पलेनैवअभ्यंगंकारयेदथ अभ्यंगस्तैलेन शिवस्यसर्पिषास्नानंप्रोक्तंपलशतेनवै पलानांद्विसह
स्नानंविधीयते तावतामधुनाचैवदध्नाचैवततःपुनः तावतैवहिक्षीरेणगव्येनैवभवेत्ततः भूयःसार्द्धसहस्रेणपलानामैक्षवेण
येत्स्नानंभक्त्याचोष्णांबुनाततः स्नापयेद्भक्तितोलिंगमापीठांतंचतच्छुभम् नीलोत्पलसहस्रेणमालांबध्वाप्रपूजयेत् अलाभे
भर्द्धार्द्धंवापिकारयेत् अलाभेबिल्वपत्रैर्वाश्वेतमंदारजैरपि दमनैर्गुरुपुष्पैर्वाशमीशक्रार्कनागरैः प्रपूज्यकारयेद्भक्त्यासुगंधं
गुग्गुलुंचाज्यसंयुक्तमगरुंवासितंदहेत् ततोनीराजनंदीपैःषड्विंशत्यानुकारयेत् सर्षपैर्दधियुक्तैश्चदूर्वागोरोचनाक्षतैः गंध
कंदद्यान्नृपार्थचंद्रशेखरम् शतपत्रंततःपद्ममष्टपत्रंसकर्णिकम् कृत्वानिवेदयन्मूर्ध्निलिंगस्यकुसुमैःसह चामरंदर्पणंचैवदीपव
पयेत् धूपंसर्जरसंचैवसंघट्टंपूर्वमेवच वितानकध्वजौदद्यात्किंकिणीरवनादितौ अथाष्टभिःक्षितिःपीड्याअंगैर्भक्त्यातुदंडव
...धंकरंचशिवाप्रियम् प्रदक्षिणांततोगच्छेच्छनैर्निर्माल्यवर्जितः प्रणम्यचपुनःपश्चान्नैवेद्यंचनिवेदयेत् कुर्यादेत

...धर्भावेत् समुद्धृत्यशतंसाग्रंवसेत्कल्पायुतंदिवि भुवनंब्रह्मलोकांतंभुक्त्वाभोगानशेषतः ततःक्रीडायतेतस्मिन्विमा
र्युतः भोगान्यथेप्सितान्भुक्त्वाशिवसायुज्यतांव्रजेत् केवलेनाथवाज्येनदध्नागव्येनवैतथा पयसापंचगव्येनपयसेक्षुरसेनवा यःकार
स्नानंविधिनानेनमंत्रतः सोपितेनैवमार्गेणगमिष्यतिपरंपदम् एवमेवहिशूद्रस्यस्पर्शमंत्रविवर्जितः अन्येशूद्रस्यविशेषा अस्मत्तु
द्योतेनुसंधेयाः वास्कसंहितायाम् पद्ममष्टदलंहैमंनवरत्नैरलंकृतम् कर्णिकाकेसरोपेतमासनंपरिकल्पयेत् राजतंतदभावेतु
पिवा तस्यकर्णिकामध्येकृत्वालिंगंकनीयसम् अथवास्फटिकोपेतंपूजयेद्विस्तृतंक्रमात् ततःपंचवक्त्रपूजाहेरंबादिपूजादीन्युक्त
स्तरान्नोच्यंते इतिदिनकरभट्टकृतेशांतिसारेमहापूजासमाप्ता अथत्वरितरुद्रविधानम् यस्यकुक्षौजगत्सर्वंस्थावरंजंगमंतथा
स्तस्मैब्रह्मविष्णुशिवात्मने अस्यत्वरितरुद्रस्यन्यासमुद्राःक्रमेणतु जपहोमादिकंसर्वंकथ्यतेसर्वसिद्धये छंदोनुष्टुबथर्वाथऋषि
देवतात्वरितोरुद्रोबीजशक्तिर्नमोस्त्विति देवागारेनदीतीरेशुचावन्यत्रवाशुचिः उपविश्यनियम्यासून्संकल्प्यहृदिसंस्थितम् क
श्चैवमूलमंत्रंचविन्यसेत् न्यासंमंत्रपदैःकुर्यात्पंचभिर्हृदयादिकम् अथषण्न्यासाः यःशिरसि रुद्रःललाटे अग्नौनेत्रयोः यःकर्णा
नासिकायाम् यःमुखे ओषधीषुबाह्वोः यःहृदये रुद्रःनाभौ विश्वागुह्ये भुवनाअपाने विवेशऊर्वोः तस्मैजान्वोः रुद्रायजंघयोः नमः
भ्याम् अस्तुचरणयोः योरुद्रोअग्नौहृदिविन्यस्यशीर्षयोस्त्विति विन्यसेत् यओषधीषुशिखायाम् योरुद्रःकवचंन्यसेत् विश्वाभुवन

वेशेति नेत्रत्रयाय वौषट् तस्मैरुद्रायनमोस्त्विति अस्त्रमेवच अनेनैवतुपंचांगन्यासएवमुदाहृतः अंगुल्यग्राणिमूलेतुकृत्वांगुष्ठेनपीडयेत् सा
शुभदाप्रोक्तासैवशांतिप्रदायिनी एषतेरुद्रभागः सहस्वस्त्रांबिकयातंजुषस्वस्वाहा एषतेरुद्रभागमितिमुद्राप्रदर्शनम् श्रीकामः शिर्षिकुर्वी
जस्कामस्तुनेत्रयोः मुखेत्वन्नत्वकामस्तुग्रीवायांरोगनाशनम् हृदयेसर्वकामस्तुनाभौज्ञानंप्रदर्शयेत् प्रजाकामस्तुगुह्येस्यात्पशुकामस्तुजा
जान्वोर्वैग्रामकामस्तुराष्ट्रकामस्तुपादयोः वशीकरणकामस्तुवामहस्तेनदर्शयेत् पापक्षयेभिचारेचव्याधेरुपगतावपि बहिःशरीरात्कु
द्रोतिवैस्मरन् एवंमुद्रादर्शयित्वाततोध्यानंसमाचरेत् चतुर्बाहुंत्रिनेत्रंचशुद्धस्फटिकसन्निभम् उग्रेकर्मणिचैवोग्रमूर्तिंध्यायेदुमा
नंनागपाशंचशूलपाणिंजटाधरम् ध्यात्वैवंशंकरंपापान्मुच्यतेमानसोद्भवात् अधःशाय्येकभक्ताशीब्रह्मचारीहविष्यभुक् अयुते
पूजयेच्छिवम् जुहुयात्तद्दशांशेनतद्दशांशेनतर्पणम् मार्जनंतद्दशांशेनदशांशेनतुभोजयेत् एवंकृतेतुसिद्धिःस्यात् फलार्थेतुततोऽ
णमेवंतुकृत्वासंपूज्यशंकरम् जपेत्त्वरितरुद्रंतुसर्वकामसमृद्धये श्रीकामः शांतिकामोवाजपेल्लक्षमतंद्रितः बिल्वसमिद्भिःश्रीकामः शां
मथैः जुहुयादाज्यसंमिश्रैस्तर्पणंमार्जनंततः जप्त्वालक्षंतुपुत्रार्थीपायसंजुहुयात्ततः वित्तार्थीश्रीफलैर्होममायुष्कामस्तुदूर्वया तिलैराज्
स्तेजस्कामोघृतेनवै व्रीहिभिःपशुकामस्तुराष्ट्रकामस्तुवैयवैः पायसंसर्वकामेनहोतव्यंशर्करान्वितम् मध्वक्तान्याम्रपत्राणितीव्रज्वरवि
मभव... गुडूचीभिर्हुनेत्क्षवम् सर्वरोगविनाशायसूर्यस्याभिमुखोजपेत् अयुतेद्वेजपेद्धोमःकार्योर्कसमिधाशुभः औदुंबरैरन्न

स्कामस्त [illegible] दरः अपामार्गसमिद्धोमाद्भूतबाधाविनश्यति ग्रहबाधाविनाशायजपेदश्वत्थसन्निधौ लवणान्वितदध्यक्तास्तीक्ष्णाग्रा
वाः हूयंतेसमिधःशुष्काःस्वाहांतंमंत्रमुच्चरेत् दशपंचाहुतीर्हुत्वागच्छगच्छेत्युदीरयेत् यावद्धोमोबलिर्देयःपुरुषाहारसंमितः एवंकृतेप्रमुच
मानस्त्रीवामहाग्रहात् जुहुयाच्छतपत्राणिसहस्रंप्रजयमाप्नुयात् लाजाहोमेनकन्यार्थीकन्यामाप्नोतिरूपिणीम् लाजाश्चमधुसंमिश्राःश्वेत
वापुनः हूयंतेहरितेदेशेतस्यविश्वंवशंभवेत् वामांगमुत्तमंकार्यंस्त्रीवशित्वेविचक्षणैः हस्त्यश्वामात्यशांत्यर्थंतिलैश्चाज्येनसंयुतैः हो
संस्थाप्यकुंभमेकंजलान्वितम् मंत्रंजप्त्वाष्टसाहस्रंकुंभंस्पृश्यप्रयत्नतः अभिषेकस्ततेषांवैशालांप्रोक्ष्यप्रदक्षिणम् ग्रहग्रामादिशां
र्यास्तुपूर्ववत् वास्तुपूजाप्रकर्तव्याप्राच्यांदिशिप्रदेशके ईशानायबलिःकार्यःपशूनांपतयेतथा एवंकृतेपशूनांतुप्रजानांशांति
भद्भुतेषुचसर्वेषुपशूनांग्रामबाह्यतः उपविश्यजपेद्रुद्रंत्वरितंबहुभिःसह होमःपलाशसमिधैःकर्तव्योघृतसंयुतैः ईशानायबलिः
शितंदद्भुतम् तदाशापतयेचैवपशूनांपतयेतथा वृष्टिकामोजपेल्लक्षंतिलैर्होमोघृतान्वितैः बलिपूजाप्रकर्तव्याशिवस्यवरुणस्यच
चैवार्थेत्वरितस्यजपोभवेत् अयुतद्वयजाप्यंतुयावल्लक्षंततोधिकम् एवंकृतेतुसिद्धिःस्यान्निष्कामःप्राप्नुयाच्छिवम् ऐहिकामुष्मि
गान्भुक्त्वासायुज्यमाप्नुयात् इतिदिनकरभट्टकृतेशांतिसारेत्वरितरुद्रविधानम् अथपार्थिवपूजा तिथितत्वेभविष्ये मृद्भस्मगोशं
डताम्रकांस्यमयंतथा कृत्वालिंगंसकृत्पूज्यवसेत्कल्पायुतंदिवि यक्षैर्वित्तप्रदंलिंगंस्फाटिकंसर्वकामदम् नर्मदागिरिजंश्रेष्ठमन्यद्यापिहि

न् लिंगवल्लिंगाकारम् तेननार्मदादेरपिलिंगस्यनाकारस्यनपूज्यतेति हेमाद्रौमात्स्ये रत्नजंहेमजंलिंगंपारदंस्फाटिकंतथा पार्थिवंपिष्टपै
वासर्वाभीष्टप्रदायकम् पौष्पंलिंगंसहायभूतमृदापि केवलपुष्पैस्तदसंभवात् तत्रैवनंदिपुराणे आयुष्मान्धनवान्श्रीमान्पुत्रवान्धा
न्सुखी वरमिष्टंलभेल्लिंगंपार्थिवंयःसमर्चयेत् तस्मात्तुपार्थिवंलिंगंज्ञेयंसर्वार्थसाधकम् तत्रैवशिवधर्मे वालुकानिचलिंगानिका
वानिच सहस्रपूजनात्सोपिलभतेवांछितंफलम् युगपद्बहुपूजनेविशेषोरुद्रयामले एवमंत्रंविधायाथपूर्वमृत्पिंडशेषतः अवशि
प्रतिष्ठांतंचपूर्ववत् कृत्वाथवापृथक्पिंडान्प्रथमंलिंगसंख्यया मंत्रैस्तदीयनिर्माणप्रमुखंतुततश्चरेत् मृदाहरणादिमाणप्र
यकुर्यात् अथवामृदाहरणंसकृत्कृत्वापूजनीयलिंगसमसंख्ययापिंडान्कृत्वासंघट्टनादिपूजांतंप्रत्येकंकुर्यादित्यर्थः तत्रैवक
अक्षादल्पपरीमाणंनलिंगंकुत्रचिन्नरः कुर्वीतांगुष्ठतोह्रस्वंनकदाचित्समाचरेत् अक्षोशीतिरक्तिकाः तेषोडशाक्षइत्यमरात्
माणंप्रधानलिंगस्यनवेदिकायाः अंगुष्ठशब्देनांगुष्ठबृहत्सर्वग्रंथिरुच्यते अंगुष्ठांगुलिमानंतुयत्रयत्रोपदिश्यते तत्रतत्रबृहत्पर्व
नयेत्सदेतिछंदोगपरिशिष्टात् अंगुष्ठमानमंगुलिमानंवेत्यर्थः तत्रैवगौतमः रात्रावुदङ्मुखःकुर्याद्देवकार्यंसदैवहि शिवार्चनंसद
चिः कुर्यादुदङ्मुखः सदादिवारात्रौच लैंगे विनाभस्मत्रिपुंड्रेणविनारुद्राक्षमालया पूजितोपिमहादेवोनस्यात्तस्यफलप्रदः तस्मान्
र्तव्यंललाटेवैत्रिपुंडकम् ॐ ह्रूं नमइतिरुद्राक्षान्प्रत्यभिमंत्र्यमालांधारयेदित्युक्तम् तत्रैवपूजाधिकारार्थंपंचाक्षरजपउक्तस्तत्रैव

जपांते नमः पापनाशनसिवो वस्थांगतोपिवा महापातकयुक्तोवामंत्रस्यास्यजपेयथा अधिकारी भवेत्सर्व इतिदेवोब्रवीच्छिवः इतितथाथ
त् तत्रैवब्राह्मे यावन्नदीयतेचार्घ्यंभास्कराय निवेदितम् तावन्नपूजयेद्विष्णुं शंकरंवासुरेश्वरम् तत्रैवदेवीपुराणे मृदाहरणसंघट्ट प्रति
मेवच स्नपनंपूजनंचैवविसर्जनमतःपरम् हरोमहेश्वरश्चैवशूलपाणिःपिनाकधृक् पशुपतिःशिवश्चैवमहादेवइतिस्मृतः नामक्रमेणप
र्माणिकार्याणीत्यर्थः पूजनमर्घ्यादि प्रतिष्ठाह्वानयोरदृष्टार्थत्वात्पाठक्रमएव यद्यप्यत्रनामान्येवविनियुक्तानितथापि ध्यात्वाप
त्रनाम्नासमाहितः नमस्कारेणपुष्पादिविन्यसेच्चपृथक्पृथक् इतिसामान्यवाक्यान्नमोंततातज्ञेया पूजनेचयद्यपिशिवनामोक्तं त
ंचाक्षरोग्राह्यइत्युक्तम् तत्रैवनंदिपुराणे गोभूहिरण्यवस्त्रादिबलिपुष्पनिवेदने ज्ञेयोनमःशिवायेतिमंत्रःसर्वार्थसाधकः पं
तत्वाभावात्पुनर्नमः शब्दोवाच्यइत्युक्तंतत्रैव नमःशब्दस्यदानार्थत्वात्पूर्वस्थितनमःशब्देनतत्सिद्धेः विसर्जनात्पूर्वंवामावर्तेना
तत्रैवभविष्ये शर्वायक्षितिमूर्तयेनमः भवायजलमूर्तयेनमः रुद्रायाग्निमूर्तये० उग्रायवायुमूर्तये० भीमायाकाशमूर्तये० पशुप
नमूर्तये० महादेवायसोममूर्तये० ईशानायसूर्यमूर्तयेनमः मूर्तयोष्टौहरस्यैताःपूर्वादिक्रमयोगतः आग्नेयांताःप्रयोज्यास्तुवेद्यां
जेत् एतावेद्यांपूज्याइत्यर्थः अत्रप्रसिद्धप्रागादिग्रहणमित्युक्तंतत्रैव युक्तंतुपूज्यपूजकांतरालस्येति अत्रशूद्रस्याप्यधिकारः शूद्रःकर्म
योनित्यंस्वीयानिकुरुतेप्रिये तस्याहमर्चांगृह्णामिचंद्रखंडविभूषिते नमोंतेनशिवेनैवस्त्रीणांपूजाविधीयते स्वाहाप्रणवसंयुक्तं श

मंत्रंदद्देद्द्विजः शूद्रोनिरयमाप्नोतिब्राह्मणःशूद्रतामियात् इतिस्कांदात् एवंप्रकारेणप्रणवनिवृत्तिः अथप्रयोगः अमुककामःपार्थिवलिं
जांकरिष्यइतिसंकल्प्य विभूतिरुद्राक्षधारणंकृत्वायथाशक्तिपंचाक्षरंजप्त्वापुष्पदूर्वायुतमर्घ्यंसूर्यायेदमर्घ्यंनममेतिदत्वा हरायनमइति
हरणं महेश्वरायनमइतिसंघट्टनम् शूलपाणयेनमइतिप्रतिष्ठापनं पिनाकधृषेनमइत्यावाहनम् अथशारदोक्तध्यानम् ध्यायेन्नि
जतगिरिनिभंचारुचंद्रावतंसंरत्नाकल्पोज्ज्वलांगंपरशुमृगवराभीतिहस्तंप्रसन्नम् पद्मासीनंसमंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं
द्यंविश्ववंद्यंनिखिलभयहरंपंचवक्त्रंत्रिनेत्रम् नमःशिवायेतिपाद्यार्घ्याचमनीयानि पशुपतयेनमइतिस्नानम् नमःशिवायेतिवस्त्र
ंधालंकारपुष्पधूपदीपनैवेद्यफलतांबूलानिदत्वा वेद्यामष्टमूर्तीः रक्षनादिनापूजयेत् शर्वायक्षितिमूर्तयेनमःप्राच्याम् भवायजल
याम् रुद्रायाग्निमूर्तयेनमउदीच्याम् उग्रायवायुमूर्तयेनमःवायव्याम् भीमायाकाशमूर्तयेनमःप्रतीच्याम् पशुपतयेयजमान
ॠत्याम् महादेवायसोममूर्तयेनमः दक्षिणस्याम् ईशानायसोममूर्तयेनमआग्नेयाम् महादेवायक्षमस्वेतिसंहारमुद्रयाविसर्जनम्
रभट्टकृतेशांतिसारेपार्थिवपूजाप्रयोगः अथकाम्यप्रयोगः कार्तिकेमार्गशीर्षेवामाघेवैशाखसंज्ञके श्रावणेबहुलेपक्षेव्रतस्याचरणं
था कृतनित्यक्रियःपूजोपकरणानिसंपाद्यशुच्यवकाशेप्रागुदगुपविश्याचम्यप्राणानायम्यतिथ्यादिस्मृत्वामुककामोऽमुकसंख्यया एत
पार्थिवलिंगानि पूजयिष्ये तदंगभूतशुद्धिप्राणप्रतिष्ठामातृकान्यासान् विधास्येइतिसंकल्प्य पृथ्विित्वयेतिमंत्रस्यमेरुपृष्ठऋषिः कूर्मे

[illegible] वशने विनियोगः पृथ्वित्वयाधृतालोकादेवित्वंविष्णुनाधृता त्वंचधारयमांदेविपवित्रंकुरुचासन मितिकुशाजिनचेल
सनेउपविश्य पृथिव्यैनमः आधारशक्त्यै॰ विम्वशक्त्यै॰ चिच्छक्त्यै॰ मायाशक्त्यैनमइत्यासनंसंपूज्य मूलेनशिखामबध्वात्महष्ट्यावलोक
रूपंअस्त्रायफडितिजलप्रक्षेपेणांतरिक्षात् अपसर्पंतुयेभूतायेभूताभुविसंस्थिताः येभूताविघ्नकर्तारस्तेनश्यंतुशिवाज्ञया अपक्राम
पिशाचाः सर्वतोदिशम् सर्वेषामविरोधेनब्रह्मकर्मसमारभेत् इतिमंत्राभ्यांवामपार्ष्णिघातत्रयेण भौमांतरिक्षविघ्नानुत्सार्य सर्व
शार्ङ्गायसशरायास्त्रराजायस्फुदर्शनायहुंफडितिछोटिकाभिस्तालत्रयेणच दिग्बंधंविधायास्त्रेणकरशुद्धिंकृत्वागुरुभ्योनमः पर
त्परात्परगुरुभ्योनमः परमेष्ठिगुरुभ्योनमः आचार्यगुरवेनमः नमोमहद्भ्यइतिनत्वा भूतशुद्धिमारभेत् यथाहृदयेअदीपकलिकारं
त्रेणांकुशमुद्रयाब्रह्मांडस्थितसहस्रदलपद्मांतर्गतशिवेनसंयोज्य ॐ ह्रां सद्योजातायनिवृत्तिकालात्मने हुंफडितिपादादिजान्वव
ष्ठाकलात्मने फडितिहृदयादिवदने तुंहृईशानायशांत्यतीतकलात्मने हुंफडितिवदनादिमूर्ध्निन्यसेत् एवंभूतान्युपसंहृत्यजन्मांतेदुः
षंदक्षिणकुक्षौविचिंतयेत् ब्रह्महत्याशिरस्कंचवर्णकस्तेयकद्वयम् सुरापानहृदायुक्तंगुरुतल्पकटिद्वयम् तत्संयोगिपदद्वंद्वमंगप्रत्
उपपातकरोमाणंरक्तश्मश्रुविलोचनम् खड्गचर्मधरंपापमंगुष्ठपरिमाणकम् अधोमुखंकृष्णवर्णंदक्षकुक्षौविचिंतयेत् ततोयमितिवायुबी
रकेषोडशवारंजप्त्वापापंविशोध्यरमितिबहिर्बीजेकुंभकेचतुःषष्टिवारंजप्त्वातद्देहंनपुनर्वायुबीजेरेचके द्वात्रिंशद्वारंजप्त्वा नित्यशुद्धबुद्धस्व

ब्रह्मैवाहमितिध्यात्वा पुनः सिसृक्ष एवमिति ततोथबीजेन स्राव य वानाप्य्व्यवहीनविंशतिवार महमित्याकाशबीजेन देवाहारात्स्वावयवान्
वयित्वा ॐ हौंईशानायनमः मूर्ध्नि ॐ हैंतत्पुरुषायनमः मुखे ह्रूंअघोरायनमः हृदि ह्रींवामदेवायनमः गुह्ये सद्योजाताय॰ पादयोः
सन्नेदेवात्मके देहे ब्रह्मांडस्थित परमात्मनः सकाशात्स्वीवं रुं हासो हमिति हृदयमानीय प्राणप्रतिष्ठांकुर्यात् अस्यश्री प्राणप्रतिष्ठामंत्र
ष्णुरुद्राऋषयः ऋग्यजुःसामानिछंदांसि प्राणशक्तिर्देवता आंबीजं ह्रींशक्तिः क्रौंकीलकं स्वशरीरेप्राणप्रतिष्ठापने विनियोगः
कंखंगंघंङं अं आकाश वायु तेजोजल पृथिव्यात्मने आं अंगुष्ठाभ्यांनमः ॐ ह्रीं ई चंछंजंझंञं ई शब्दस्पर्शरूपरसगंधात्मने
नः ॐ ह्रूं ऊ टंठंडंढंणं ऊ श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणात्मने ऊं मध्यमाभ्यांनमः ॐ ह्रैं ऐं तंथंदंधंनं ऐं वाक्पाणिपादपायूपस्थात्मने ऐं
मः ॐ ह्रौंऔं पंफंबंभंमं औं स्वमादानगति विसर्गानंदात्मने औं कनिष्ठिकाभ्यांनमः ॐ ह्रः अं यंरंलंवंशंषंसंहंळंक्षं अं मनोबु
अः अस्त्रायफट् एवंहृदयादौ अथध्यानम् रक्तांभोधिस्थपोतोल्लसदरुणसरोजाधिरूढाकराब्जैः पाशंकोदंडमिक्षूद्भवगुणमथच
बाणान् बिभ्राणासृक्कपालं त्रिनयनलसितापीनवक्षोरुहाढ्या देवीबालार्कवर्णाभवतु सुखकरी प्राणशक्तिः परानः ओं आं ह्रीं क्रों यंरंल
हंसोहं हंसः क्रोंह्रींआंअमुंप्राण इहप्राणाः ॐ आंह्रींक्रों यंरं॰ क्रोंह्रींआं अमुंजीव इहस्थितः ॐ आंह्रींक्रों यंरं॰ क्रोंह्रींआं अमुंसर्वेंद्रिय
[illegible] क्रोंह्रींआं अमुंवाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणपाणिपादपायूपस्थप्राणाइहागत्यसुखंचिरंतिष्ठंतुस्वाहा इतिमंत्रंहृदिकरं नि

...प्रणवावृत्तीः कृत्वाक्रमेण ममसंस्काराजाता इतिभावयेत् इतिप्राणप्रतिष्ठा अथांतर्मातृकाबहिर्मातृकाः श्री
नश्चान्यत्रोक्तप्रकारेणन्यसेत् ततःपूजांकुर्यात् तत्रादौसूर्यायदेवताभ्यश्चार्घ्यंनिवेदयेत् तदुक्तंब्रह्मांडपुराणे यावन्नदीयतेचार्घ्यं
रायनिवेदितम् तावन्नपूजयेद्विष्णुंशंकरंवासुरेश्वरमिति निवेदनप्रकारस्तु भगवन्सूर्य भगवत्योदेवता अद्याहंपार्थिवलिंगपूज
यामीत्येकाहपूजनपक्षे दशाहपूजनपक्षे अद्येत्यस्यस्थानेदशाहमित्यूहनीयं एवंचविंशतिरात्रमासत्रिमासषण्मासनवमास
वपक्षेषूहनीयंउपरितनामष्टांगुलीमृदमुपाकृष्य पृथिव्यैनमः इतिपृथ्वीमंत्रेण पृथ्वीमभिमंत्र्य गंधाद्यैरभ्यर्च्य उद्धृतासिवराहेण
बाहुना मृत्तिकेत्वांप्रगृह्णामिपूजयाचधनेनचेतित्रिः समुद्धृतांमृदंपुनरभिमंत्र्यसंशोध्यशुद्धभांडेस्थापयेत् अतएवान्वहं
निक्षिप्याभिमंत्रितेनजलेनाप्लाव्यपिंडयेत् ततोमूलमंत्रस्यन्यासंविधायशंखेतरपात्रेजलमापूर्यमूलेनाभिमंत्र्यतेनात्मानंपूजो
क्ष्यगंधाद्युपकल्प्य द्वारपूजांविदध्यात् यथादेहल्यैनमः गणेशायनमः दक्षिणे चामुंडायै० वामे भैरवाय० पूर्वे भरव्यै० पश्चिमे
पनम् प्रासादमंत्रस्य वामदेवऋषिः शिरसिपंक्तिछंदोमुखे सदाशिवोदेवताहृदि हंबीजं ऋशक्तिः सकारःकीलकम् हांहृदया
षडंगः स्वरक्रमेणाफडित्यर्घ्यपात्रंप्रक्षाल्य भूमौचंदनाद्युनाकल्पितेमंडलेमत्स्यमुद्रांप्रदर्श्य दशकलाव्याप्तायसूर्यमंडलायनमइतिजलं
निक्षिपेत् वषडित्यक्षताः नमइतिपुष्पं वौषडिति निरीक्ष्य अंकुशमुद्रया गंगेचयमुनेचैवेतितीर्थान्यावाह्य फडितिसंरक्ष्य हुमित्यवगुं

॥

कराभ्यामाच्छाद्य मूलेन दशवारमभिमंत्र्य तेनात्मानं पूजोपकरणानि च प्रोक्ष्यास्त्रेण द्वारदेशं प्रोक्ष्य गुरुभ्यो नमः चिच्छक्त्यै नमः नागायै
मुनायै॰ धात्रे॰ विधात्रे॰ शंखनिधये॰ पद्मनिधये॰ द्वारश्रियै॰ देहल्यै॰ इति शिवद्वारे देवताः संपूज्यान्य पूजां विदध्यात् आधारशक्त्यै न
कूर्माय नमः स्कंदाय॰ नीलाय॰ पद्माय॰ ततः पूर्वाद्यष्टदलेषु कर्णिकायां च वामायै॰ ज्येष्ठायै॰ रौद्र्यै॰ काल्यै॰ कलविकरिण्यै॰ बलायै
थिन्यै॰ सर्वभूतदमन्यै॰ मनोन्मनायै नम इति ॐ नमो भगवते सकलगुणात्मशक्तियुक्तायानंताय योगपीठात्मने त्रिनेत्राय नम
ष्पांजलिं दत्वा देशकालौ संकीर्त्य महेशानुग्रहद्वारा मनोवांछितसिद्ध्ये पूजयिष्ये पार्थिवानि लिंगान्यमुकसंख्यायाविनियोग
थ्वीतलान्मृदमादाय ततो गं ग्लौं गणपतये नमः ग्लौं गं ह्रीं मृदमभिमंत्र्य वराभयपाणियुगं गणपतिं निर्माय पुनर्मंत्रं पठित्वा प
तेप्रतिष्ठाप्य ॐ हूं हराय नम इति तोलकान्मृदं गृहीत्वा ॐ महेश्वराय नम इति संघट्टनं विधाय ॐ हं शूलपाणये नमः स्था
म्नपात्रे निधाय च साक्षतलिंगं स्थापनमुद्रया स्थापयेत् ततः शिवपंचाक्षरमंत्रस्य वामदेव ऋषिः शिरसि पंक्तिछंदः मुखे सदा
हृदये अभीष्टसिद्धये विनियोगः मूलेन व्यापकन्यासं कृत्वा करकपिच्छिका पुष्पगर्भा हृदि स्थां बध्वा ध्यायेत् यथा ध्यायेन्नित्यं महेशं
रिनिभं चारुचंद्रावतंसं रत्नाकल्पोज्ज्वलांगं परशुमृगवराभीतिहस्तं प्रसन्नम् पद्मासीनं समंतात्स्तुतममरगणैर्व्याघ्रकृत्तिं वसानं वि
[illegible] पंचवक्त्रं त्रिनेत्रम् इति ध्यात्वा वहन्नासापुटेक्रमेण हृदयाद्देवस्य तेजः पुष्पे समानीय तत्पुष्पं मूर्तौ समर्प्य ॐ हुं

...नादिपंचमुद्राः प्रदर्श्य हुमित्यवगुंठ्य वमिति धेनुमुद्रयामृदीकृत्य परमीकृत्य षडंगेन्यस्य मुकुलीकृत्य शिवे प्राण...
र्यात् अस्यश्री प्राणप्रतिष्ठामंत्रस्य ब्रह्मविष्णुमहेश्वराऋषयः ऋग्यजुःसामानि छंदांसि चैतन्यं देवता देवे प्राणप्रतिष्ठापने विनियोगः
ह्रीं क्रों यं रं लं वं शं षं सं हं सः सोहं शिवस्य प्राणा इह प्राणाः ॐ आं ह्रीं क्रों यं रं॰ शिवस्य जीव इह स्थितः ॐ आं ह्रीं क्रों यं रं॰ शिवस्य सर्वे...
ओं आं ह्रीं क्रों यं रं॰ शिवस्य वाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राणजिह्वापाणिपादपायूपस्था इहैवागत्य सुखं चिरं तिष्ठंतु स्वाहा इति चत्वा...
मंत्रेण वागुप्रत्तिं विभाव्य पूर्ववत् करकपिच्छिकां कृत्वा ध्यायेत् बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो महेशः सर्वालंकारदी...
नीलयो व्याघ्रचर्मात्तवासाः ध्येयो मुक्तांगरागामृतरसकणिकाद्रिप्रभः पंचवक्त्रस्त्र्यक्षः कोटीरकोट्युच्चटितहिमरुचिः सर्वदा...
ति ध्यात्वा नमस्कारं कुर्यान्मंत्रमुदीरयन् नमोस्तु स्थाणुरूपाय ज्योतिर्लिंगामृतात्मने चतुर्मूर्तेश्वपुच्छायाभासितांगाय शंभवे
ज्ञानप्रदानैकेमहात्मने नमस्ते देवदेवेश सर्वभूतहितेरत अनंतकांतिसंपन्न अनंतासनसंस्थितः अनंतकांतिसंभोगपरकांतन...
न्नरूप महारूप सर्वरूपोत्तमोत्तम पशुपाशार्णवासीन दृढव्रत नमोस्तु ते स्वभावनिर्मलाकार सर्वोपाधिविनाशन योगियोगिन्...
योगीश्वर नमोस्तु ते प्राणप्रतिष्ठां कृत्वा तु इदं स्तोत्रमुदीरयेत् लिंगस्तवं महापुण्यं यः शृणोति सदा नरः नोत्पद्यते स संसारे स्थानं प्राप्नोति
श्वनम् एवमेतं विधायाथ पूर्वमृत्पिंडशेषतः अवशिष्टानि रचयेत्प्रतिष्ठां तं च पूर्ववत् कृत्वाथवा पृथक् पिंडान् प्रथमं लिंगसंख्यया मंत्रैरादा...

र्माणप्रमुखंतुततश्चरेत् अवशिष्टमृदाशक्तिनिर्माणंप्रमुखंमनुः ॐ नमोभगवत्यैउमादेव्यैशिवायैशिवप्रियायैनमइतिमंत्रः स्कांदेनम
नातस्यनिर्माणप्रमुखंचरेत् ॐ ऐंहुंक्षंक्लींकुमारायनमइतिमंत्रः विधायषण्मुखंशक्तिवराभाकृतिमत्करम् मयूरवाहनंलिंगं पंक्त्यंतेचप्र
तम् ततोगणेशप्रमुखान्स्वस्वमंत्रेणपूजयेत् तत्रपूर्वस्थापितमध्ये ॐ हुं शिवायनमः मध्येसमर्पयामीतिनिवेद्य ॐ हुं पशुपतयेनमः
मीति प्रतिलिंगंस्नानंसमर्प्य पुनः शिवायनमइति दीपदानांतंकृत्वावरपूजापूर्वोद्यष्टदिक्ष भवायनम इत्यष्टमूर्तीः संपूज्य नैवेद्यमानी
युचंद्रबीजैर्विभाव्य मंत्रेणापोशनंकृत्वावामेनग्रासमुद्रांप्रदर्श्य दक्षिणेन पंचप्राणाहुतिमुद्राः प्रदर्शयेत् मुद्रालक्षणंगुरुमुख
मध्येस्रुगंधजलमुत्तरापोशनंस्वटिकांचदत्वा करोद्वर्तनमुत्तरापोशनं फलतांबूलदक्षिणादानादिसमर्प्य निर्माल्येनचंडीगणेशाकु
तत्तन्मंत्रैः पंचोपचारैः संपूज्य महादेवायनमइतिसंहारमुद्रया तत्तेजः स्वहृदयमानीय निर्माल्यंशिरसिचंदनंललाटेधृत्वायथा
ति यस्तु पूजयते भक्त्या लिंगंत्रिभुवनेश्वरम् सस्वर्गराज्यमोक्षाणांक्षिप्रंभवतिभाजनमिति इतिदिनकरभट्टकृते शांतिसा
योगेविशेषानुष्ठाननिरूपणम् अथकामनाभेदेनसंख्याभेदः देशिकालसकलंज्ञात्वाकुर्याल्लिंगंफलप्रदम् विद्यार्थीलिंगसाह
चतदर्द्धकम् पुत्रार्थीसप्तसाहस्रंकन्यार्थीतुशतत्रयम् वंध्यालिंगायुतंकुर्यात्सर्वपापहरंशुभम् राज्यार्थीशतसाहस्रंकांतार्थीशत
मोक्षार्थी कोटिगुणितं भूकामश्चसहस्रकम् रूपार्थीतुत्रिसाहस्रंतीर्थार्थीद्विसहस्रकम् सुहृत्कामेसहस्रंस्याद्वश्यार्थीशतमष्टक

निगडान्मुक्ति
थासि स शतं मोहनार्थी शताष्टकम् उच्चाटनपरश्चैवसहस्रंतुयथोक्तवत् स्तंभनंतुसहस्रेणजारणांचतद्वत्
सहस्रंसार्द्धमीरितम् महाराजभयेपंचशतंचोरादिसंकटे शतद्वयंचडाकिन्याभयेपंचशतंपरम् दरिद्रः पंचसाहस्रंअयुतंसर्वकाम
अथनित्यपूजनेसंख्या एकंपापहरंप्रोक्तंद्विलिंगंवार्थसिद्धिदम् त्रिलिंगंसर्वकामानांकारणंपरमाद्भुतम् उत्तरोत्तरमेवंस्यात्पूर्वोक्त
धि कृत्वायथोक्तविधिनापापंनश्यतितत्क्षणात् अथापरम् लिंगानामयुतंकृत्वानराजभयमाप्नुयात् सहस्राणितथापंच
तेध्रुवम् कारागृहविमुक्त्यर्थमयुतंकारयेद्बुधः डाकिन्यास्तुभयेप्राप्तेसहस्रंकारयेत्तदा सहस्राणांपंचशतंपुत्रार्थीका
त्वानित्यविधानेनसगुणंस्कतमाप्नुयात् लिंगानामयुतेनैवकन्यकासंततिंमुने एकलिंगार्चनान्नित्यमतुलांश्रियमाप्नुयात्
लिंगानांयःकरोतिनरोत्तमवि शिवःस्वयंभवेत्क्षिप्रंनात्रकार्याविचारणा कोटिरेकातुलिंगानांमोक्षदासर्वकामदा अर्चापार्थि
कोटियज्ञफलप्रदा अथकाम्यभेदेनफलभेदः मृद्भस्मगोमयैर्देवितथावालुकयापिवा कृत्वालिंगंसकृत्पूज्यवसेत्कल्पायुतंदि
मेववर्णानांस्फाटिकंसर्वकामदम् सर्वदोषविमुक्त्यर्थमन्यथादोषमावहेत् यत्फलंपाकयज्ञेषुहविर्यज्ञेषुयत्फलम् एकाहात्तदवा
गार्चनरतःसदा गवांशतसहस्रस्यसम्यग्दत्तस्ययत्फलम् दशाहात्तदवाप्नोतिसम्यक्लिंगार्चनेरतः वाजपेयशतेरिष्ट्वायल्लभेत
त्तमाः विप्रोविंशतिरात्रेणरुद्रभक्त्यातदाप्नुयात् अश्वमेधसहस्रस्यसम्यगिष्टस्ययत्फलम् मासेनतदवाप्नोतिरुद्रलिंगार्चनेरतः

राजसूयसहस्रस्यसम्यगिष्टस्ययत्फलम् मासेनतदवाप्नोतिशिवलिंगार्चनेरतः सर्वतीर्थाभिषेकस्यसर्वदानफलानिच सर्वयज्ञफ
वउपवासफलानिच सम्यगिष्टफलःसर्वक्षेमाचारःसमाधिना नवमासात्समासाद्यब्राह्मणोविजितेंद्रियः सर्वमेतदवाप्नोति लिंगे
र्चयतेशिवम् यस्तुसंवत्सरंपूर्णंपूजयेदेकलिंगकम् तस्यतुष्टःप्रयच्छामिगाणपत्यंनसंशयः माघेमासिसमुद्युक्तस्त्रिसंध्यंसे
वम् लभेत्षण्मासिकंपुण्यंमासेनैवनसंशयः यथामाघेतथाषाढेकार्तिकेतुविशेषतः त्रिषुपुण्यंसमंज्ञेयंमासेष्वेतेषुयत्फल
नयतेनित्यंलिंगेत्रिभुवनेश्वरम् सस्वर्गराज्यमोक्षाणांक्षिप्रंभवतिभाजनम् अथोद्यापनंलैंगे अथातःसंप्रवक्ष्यामि
स्यच येनयस्यविधानेनव्रतंसंपूर्णतामियात् सहस्रंवाथलक्षंवापूजयित्वायथाविधि कोटिंवाथविधानेनक्रामनांतेथ
सितुव्रतेराजन्विनिर्मायमहेश्वरम् स्थापयित्वाशुभेस्थानेसंपूज्यार्घ्यादिभिःक्रमात् गंधमाल्यैस्तथाधूपैर्नैवेद्यैर्विवि
हिरण्यंगांचवासांसिशिवायविनिवेदयेत् दंडवत्प्रणतोभूत्वास्तुत्वाचैवविशेषतः एकाग्रःप्रणतोभूत्वातावन्मंत्रमुदीरयेत्
हृतैःपुष्पैरशस्तैर्भावदूषितैः केशकीटापविद्धैश्चपूजितोसिमयाप्रभो अन्यथासक्तचित्तेनक्रियाहीनेनवाप्रभो मनोवाक्काय
जितोसित्रिलोचन पादोपहतपात्रेणकृतमर्घ्यादिकंमया तामसेनचभावेनतत्क्षमस्वममप्रभो मंत्रेणाक्षरहीनेनपुष्पेणविकलै
जितोसि[illegible]तत्सर्वंक्षम्यतांमम व्रतंसंपूर्णतांयातुफलंचाक्षय्यमस्तुमे एवंस्तुत्वामहादेवंनमस्कृत्यविसृज्यच नैवेद्यादि

...धातव्यं श्वेतं कुणपवाहनम् खड्गखेटधरं चोग्रं द्विभुजं चवृकाननमिति प्रतिमापूजनार्थाय वस्त्रयुग्मं प्रकल्पयेत् पंकजे

द्मो रक्ताभैर्व्रीहितंदुलैः चतुर्विंशद्दलोपेतं शक्लैर्वा कर्णिकान्वितम् तस्योपरि न्यसेत्पात्रं स्वर्णं वा रौप्यमृन्मयम् पात्रं कलशम् शङ्ख वरुणे

च्छाद्य तत्र मूलानि निक्षिपेत् मूलानि शतमूलानि विष्णुक्रांता सहदेवी तुलसी तु शतावरी मूलानीमानि गृण्हीयात्सर्वालाभे विशेषतः तस्यो

से त्पात्रमिति यदुक्तं तत्र विशेषमाह स्थापयेत्कर्णिकामध्ये वस्त्रगंधाद्यलंकृतम् कूर्चं होमजलोपेतं कुंकुमौषधिसंयुतम् कूर्चो दर्भस्तंबः

न्यसेद्विद्वान्मूलनक्षत्रदेवताम् अधिप्रत्यधिदेवौ च दक्षिणोत्तरयोः क्रमात् अधिदेवं यजेदादौ ज्येष्ठानक्षत्रदैवतम् तथा प्रत्यधिषाढ

शकभाम् उत्तराषाढऋक्षाद्या अनुराधांतमर्चयेत् ऐंद्र्यादीशानपर्यंतं पूजयेत्स्वस्वनामतः भूमिस्थचतुर्विंशति दलेषु पूर्वदलमारभ्य

क्षत्राणि स्थाप्यानीत्यर्थः नक्षत्रदेवताः स्थाप्या इति केचित् लिंगोक्तैश्चैव मंत्रैश्च प्रधानादीन्प्रपूजयेत् कश्यपेन तु स्वर्णेन प्रमा

र्द्धेन वा पुनः यथावित्तानुसारेण प्रतिमां निर्ऋतेः सुधीः उदुंबर वटाश्वत्थ प्लक्षाम्रत्वक्स पल्लवम् शतौषधीमूलशंख नवरत्नानि मृत्तिक

तां बुसद्बीजं कुंकुमं रोचनं फलम् कुष्ठं मांसी हरिद्रे द्वे मुराशैलेयचंदनम् वचा कचोरकं मुस्ता सर्वौषध्यो दश स्मृताः गजाश्वरथ्या वल्मीक संगमस्थ

वाः ह्रदगोराजनगरद्वारतश्चाष्टमृत्तिकाः तिलमाषव्रीहियवगोधूमाणुप्रियंगवाः चणकैः सहिताश्चाष्टौ सद्बीजाख्यानि सर्वदा दधिमध्वक्ष

कुंभान्वस्त्रैः स्तल्लिंगमंत्रकैः प्रधानमंत्रश्च मोषुणश्चेति मंत्रेण निर्ऋतिं चार्चयेत्ततः इति कश्यपसंहितोक्तैः पंचामृतेन संस्नाप्य आवाह्याथ समर्चये

उपचारैः षोडशभिर्यद्वा पंचोपचारकैः रक्तचंदनगंधाद्यैः पुष्पैः कृष्णासितादिभिः मेषशृंगादिभिर्धूपैर्घृतदीपैस्तथैव च सुरापोलिकमांसाद्यैर्नैवेद्यैश्चो

नादिभिः मत्स्यमांससुरादीनि ब्राह्मणानां विवर्जयेत् सुरास्थाने प्रदातव्यं क्षीरं सैंधवमिश्रितम् पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत्

द्याद्यलाभे तु यथालाभं समर्पयेत् पुष्पांतं तु समभ्यर्च्य होमं कुर्याद्यथोदितम् पुष्पांजल्यंतमित्यर्थः निर्वापप्रोक्षणादीनि चरोः कुर्याद्यथा

हविर्गृहीत्वा विधिवन्नैर्ऋत्येव ऋचा हुनेत् मोषुणः परापरेति यत्ते देवीति वा पुनः पायसं घृतसंमिश्रं हुनेदष्टोत्तरं शतम् समिदाज्यचरून्प्रत्य

संख्यया हुनेत् अधिदेवतयोश्चैव जुहुयात्स्वस्वमंत्रतः चतुर्थ्यंतैर्नमोंतैश्च स्वाहांतैः स्वस्वमंत्रकैः नक्षत्रदेवताभ्यश्च पायसेन तु होम

कैर्नाममंत्रैरित्यर्थः कृणुष्वेति पंचदशर्भिर्जुहुयात्कृसरं ततः अत्र ऋग्भिरिति ग्रहणात्प्रत्यृचं होमः यत्र तु अमुकसूक्तेन होमः कर्त्तव

थान्नैव श्रीसूक्तेनेति तत्र सूक्तेनैव होमः कर्त्तव्य इति युक्तम् संप्रदायस्तु प्रत्यृचं होम इति गायत्र्या जातवेदसे त्र्यंबकं इति क्रमात् अत्र

क्तेरेतत्पर्यंतं कृसरान्वयः उत्तरत्र वक्ष्यमाणसमिदाज्यचर्वन्वयः मंत्रद्वयस्य पाठादेव सिद्धेरिति केचित् सीरा युंजंति तामग्निं वास्तोष्पत्ये

तामग्निवर्णां तपसा ज्वलंतीं वैरोचनीमिति क्षेत्रस्य पतिना गृणाना मग्निं दूतं तथैव च एतत्पर्यंतं कृसरान्नं इत्यपरे संख्या तु वक्ष्यमाणा श्री

तथा विद्वान्समिदाज्यचरून्क्रमात् अष्टोत्तरशतैर्वापि अष्टाविंशतिभिः क्रमात् अष्टाष्टसंख्यया वापि जुहुयाच्छक्तितो बुधः त्वन्नः सोमे

[illegible] चतुर्गृहीतमाज्यं च यातेरुद्रेति मंत्रतः स्रुवेण जुहुयादाज्यं महाव्याहृतिभिः क्रमात् महाव्याहृतीराह पराशरः संक्षेप

पुरा भूर्भुवस्स्वर्महर्जनस्तपः सत्यंतथैवच आद्यास्तिस्रोमहाप्रोक्ताः स्रुवस्तुप्रतियोजयेत् शंखस्तु भूर्भुवः सुवर्महोज
पः सत्यमितिमहाव्याहृतयइत्याह बौधायनेननतु भूरग्नयेचेतिमंत्रचतुष्टयंमहाव्याहृतयइत्युक्तंचतुर्गृहीतादौसकृदेवहोमः हुत्वास्विष्टकृतंप
श्चिन्ताहुतीर्हुनेत् आचार्योयजमानोवाअग्नौपूर्णाहुतिंहुनेत् समुद्रादूर्मीतिसूक्तेनप्राजापत्यऋचानतथा पूर्णादर्विसप्ततेतिमंत्रैःपूर्णाहुतिं
होमशेषंसमाप्याथवन्हिमारोपयेद्बुधः जातारण्यग्निपक्षेनवयहविकृतिस्त्वाद्यास्मार्ताग्निपक्षेत्रवन्हिसमारोपः लौकिकाग्निपक्षेनसमारो
मंत्रेणंकुर्याद्दक्षिणेनाभिमर्शयेत् मृत्यूपशमनार्थायजपेच्चत्र्यंबकंशतम् रुद्रकुंभोक्तमार्गेणरुद्रमंत्रंस्पृशन्जपेत् रुद्रकुंभंस्पृशन्नू
भंजपेदित्यर्थः तत्रायंनियमस्त्र्यंबकस्यशतवारमेवनसाहस्रवारम् धूपंदीपंचनैवेद्यंकुंभयुग्मेनिवेदयेत् कुंभयुग्मेरुद्रकुंभेनि
प्रसादयेत्ततोदेवमभिषेकार्थमादरात् निर्ऋतिंरुद्रंच तस्मिन्कालेग्रहातिथ्यंकर्तव्यंभूतिमिच्छता पृथक्प्रशस्तंतेनैवनक्षत्रेष्वासहे
ध्यंग्रहमखः तेनमूलशांत्यग्निनानक्षत्रेष्टिमूलशांतिः अभिषेकविधिंवक्ष्येसर्वाचार्यैरुदीरितम् भद्रासनोपविष्टस्ययजमानस्यऋत्विज
समेतस्यकुर्युःसर्वेऽभिषेचनम् अक्षीभ्यामितिसूक्तेनपावमानीभिरेवच आपोहिष्ठेतिनवभिरापइद्वाद्वयेनच मदनरत्नेतु यतइंद्रद्व
तिपाठः सहस्राक्षेत्र्यृचेनापिदेवस्यत्वेतिमंत्रकैः शिवसंकल्पमंत्रेणवक्ष्यमाणैश्चमंत्रकैः वक्ष्यमाणमंत्राश्चप्रयोगेवक्तव्याः तच्छंयोरभिषे
सर्वदोषोपशांतिदं सर्वकामप्रदंदिव्यंमंगलानांचमंगलम् वस्त्रांतरितकुंभाभ्यांपश्चात्तुस्नापयेद्बुधः ततःशुक्लांबरधरःशुक्लमाल्यानुलेपनः

जमानो दक्षिणाभिस्तोषयेदृत्विकादिकान् धेनुं पयस्विनीं दद्यादाचार्याय सवत्सकाम् निर्ऋतिप्रतिमां वस्त्रं कुंभं हेम च दापयेत् वस्त्रकुंभो निर्ऋ
संबंधिनौ हेम स्वतंत्रं यथाशक्ति ग्रहार्थवस्त्रप्रतिमास्तत्तदुक्ताच दक्षिणा श्रीरुद्रजापिने देयः कृष्णोनड्वान्प्रयत्नतः तत्कुंभवस्त्रप्रतिमां तस्मै
द्यात्प्रयत्नतः इतरेभ्योपि विप्रेभ्यः शक्त्या दद्याच्च दक्षिणाम् ऋत्विग्भ्य इत्यर्थः उक्तालाभे ततो दद्यादाचार्यब्रह्मऋत्विजाम् तत्तन्मूल्यं प्र
शक्त्या वाथ प्रदापयेत् उत्तमपक्षेण मूल्यं दातव्यं तदशक्तावधमपक्षेणेत्यर्थः आचार्याय च यद्दत्तं तदर्धं ब्रह्मणे भवेत् सदस्याय ब्रह्मणो
तदर्धकम् मुख्यदक्षिणाया अभावे अर्धादिकल्पना ज्योतिर्निबंधे त्वत्र सर्वमूलहोमोप्याम्नातः प्रच्छादनोर्णवस्त्रादि दद्याद्धेनुं च
होमयेद्विप्रः सर्वमूलानि तत्रवै इति देवताचात्र मूलमेव आशीश्च तेभ्यो गृण्हीयात्प्रणम्याथ क्षमापयेत् दद्यादन्नं पायसादि ब्राह्मण
कृतम् अलाभे सति पंचाशद्दशकं तदलाभतः सर्वशांतेश्च पठनं ब्राह्मणैराशिषस्तथा गृहीक्षमापयेद्विप्रान्निर्ऋतिः प्रीयतामिति वि
स्तु नतः शांतिर्भवेच्छ्रवम् गंडांतेप्येवं कर्तव्यं पुष्यार्धे तद्देवतु पुष्यार्द्धे पुष्यस्नानमंत्रैः स्नपनमित्यर्थः अत एव ज्योतिर्निबंधे पुष्यस्नानैः
स्नापयेद्दंपती शिशुमित्युक्तम् मदनरत्ने तु पुष्यार्द्धे एवमेव त्विति पाठः इति शौनकीये मूलशांतिविधिः शतमूलानि दैवज्ञमनोहरे पुराणसमुच्चये
र्हिः शिखा १ हरिक्रांता २ सहदेवी ३ पुनर्नवा ४ शरपुंखा ५ वराहीच ६ काकजंघा ७ सुलक्षणा ८ तुंबिकाचैव ९ कर्कंधुः १० कर्पूरी ११ कालवल्लिका
[illegible] १४ श्वेतार्को १५ व्याघ्रपत्रिका १६ रुदंती १७ चाश्वगंधा च १८ मुसली १९ गिरिकर्णिका २० इंद्रवारुण्य २१ पामार्गः

...नभागेपूर्वेवाउत्तरेवास्वसद्मतः मंडपंचतुरस्रंचचतुर्हस्तंप्रमाणतः चतुर्द्वारसमायुक्तंतोरणाद्यैरलंकृतम् गोमयेनानु...
तुरस्रेचमंडले पूर्वोक्तलक्षणोपेतंकुंडमीशानतोबहिः स्रुवर्गोनप्रमाणेनतदर्धार्धेनवापुनः यथावित्तानुसारेणप्रतिमांनिर्वर्तनेःसुधीः उदुंब...
त्थप्लक्षाम्रकसपल्लवम् शतौषधीमूलशंखनवरत्नानिमृत्तिकाम् पंचामृतांबुसद्बीजंकुंकुमंरोचनंफलम् कुष्ठमासीहरिद्रेद्वेमुराशैलेयचंदनं वचा...
स्तासर्वौषध्योदशैवहि गजाश्वरथ्यावल्मीकसंगमस्थानसंभवाम् ह्रदगोराजनगरद्वारतश्चाष्टमृत्तिकाम् तिलमाषव्रीहियवागोधूमानि...
...णकैःसहिताश्चाष्टौसद्बीजाख्यानिसर्वदा ब्राह्मणाःश्रोत्रियाश्चाष्टौद्वादशात्वथषोडश ततस्तान्वरयेत्कर्त्तास्वस्तिवाचनपूर्वकम् ईश...
...श्चव्रणान्जलपूरितान् पूर्वोक्तद्रव्यसंयुक्तान्स्थापयेद्रक्तवर्णकान् शतच्छिद्रंभवेत्कुंभंस्थापयेत्तंदुलोपरि स्थापयेन्मंडपेमध्येरवङ्गच...
...धुणश्चेतिमंत्रेणनिर्ऋतिंचार्चयेत्ततः शक्लाक्षतांबरैःषोडशोपचारांश्चकारयेत् दधिमध्वक्षतैःकुंभान्वरुणैस्तल्लिंगमंत्रकैः गंधपुष्पैःसुधू...
...दूर्वकैः रुद्रेणक्रमशोभद्राअग्नेःसूक्तेनभक्तितः आनोभद्राअनेनैवपुरुषसूक्तेनचार्चयेत् मूलंप्रजामित्यष्टौवावाक्यान्याचार्यकोजपेत्
विघ्नेशलोकपालांश्चपूजयेत् स्वगृह्योक्तविधानेनकुंडेग्निंस्थापयेत्ततः प्रजापतयेस्वाहेतिमुखांतंजुहुयाद्यमम् मूलायस्वाहाप्रजापतयेस्वाहे...
मंत्रो पलाशसमिदाज्येनत्वनेनाष्टसहस्रकम् अथवाष्टोत्तरशतंप्रत्येकंजुहुयात्ततः मूलंप्रजामित्यष्टाभिर्वाक्यैर्मंत्रद्वयेनच सावित्रसौम्यनैर्ऋत...
त्रैरश्वत्थसंभवैः समिद्भिश्चतिलव्रीहीन्हुत्वाव्याहृतिभिस्ततः पूर्णाहुतिंचजुहुयाज्जपादीनांचपूर्वकम् ततोमंगलघोषैश्चस्नानकर्मसमाचरेत् आ...

पादे पितुर्गंडे त्रयाणामभिषेचनम् इतरत्र शिशोर्मातुरभिषेकं च कारयेत् धारयित्वा बृहत्कुंभं शनच्छिद्रं समाहितः ततः कुर्याद्नेनैव तु कर्मणानि
तिः प्रीयतामिति वाचयेत् आचार्याय वृषं लोहपिंडं दद्यात्सदक्षिणम् आचार्यान्यब्राह्मणेभ्यो दद्याच्छक्त्या च दक्षिणाम् श्रोत्रियाय विशिष्टाय ब्राह्म
य कुटुंबिने वस्त्रालंकारसंयुक्तां धेनुं दद्यात्पयस्विनीम् ब्राह्मणान्भोजयेत्पश्चाद्दंभलोभविवर्जितः कुरुते शांतिकं यस्तु गंडदोषात्प्रमुच्यते एतन्
भिपि समानं किंचिदुच्यते सर्पेभ्यः स्वाहेति मंत्रं मुखांते जुहुयात्ततः आश्लेषाभ्यः स्वाहा दंदशूकेभ्यः स्वाहेत्युपहोममंत्रौ इदं सर्पेभ्य इत्यष्टौ वा
र्ववन् तेषामास्तीक ऋषिः एषु सर्पाश्च देवताः नमो अस्तु सर्पेभ्य इत्युपचारांश्च कारयेत् अयं च विधिस्तैत्तिरीयपरः तदीयमंत्राग्निमुख
कश्यपोक्तो मूलाश्लेषाशांतिविधिः अथ शौनकोक्त आश्लेषाशांतिविधिः आश्लेषायां तु जातानां शांतिं वक्ष्याम्यतः परम् जातस्य द्वाद
होमं समाचरेत् असंभवे तु जन्मर्क्षे अन्यस्मिन्वा शुभे दिने स्नातोभ्यंगादिभिस्तस्मिन्वरयेत्तु द्विजोत्तमान् ऋत्विक्संख्या मूलवत् वि
स्तु द्वयं वा नदला भतः कुंभद्वयस्य मूलव्यवस्थातो वैलक्षण्यमाह देवतास्थापने चैकमेकं रुद्राभिमंत्रणे चतुर्विंशद्दलोपरि प्रधानदेवतास्थाप
तीयश्चतुः प्रस्रवणः मूलर्क्षोक्तप्रकारेण कुंभे निक्षिप्य पूजयेत् चतुःप्रस्रवणे पंचरत्नादि चतुर्विंशद्दलस्थे च शतमूलानीत्यर्थः गोमयालेपिते देशे
परिशोभिते पंकजं कारयेत्तत्र चतुर्विंशद्दलान्वितम् तंडुलैः कारयेद्यद्वा रक्तपीतसितासितैः कर्णिकायां न्यसेद्व्रीहीन्स्थापयेत्तेषु कुंभकम् आकलशे
...म इमं मे गंगे मंत्रेण पूरयेत्तीर्थवारिणा कुंभं च वस्त्रगंधाद्यैस्तत्तन्मंत्रैः प्रपूजयेत् याः फलिनीरित्यनया क्षिपेद्द्रलौषधा

...तु आश्लेषाप्रतिमांयजेत् निष्कनिष्कार्धपादैर्वाकारयित्वास्वशक्तितः तत्पूर्वोत्तरनक्षत्रे दक्षिणोत्तरयोर्यजेत् ऐंद्र
पर्यंतमितरर्क्षाणिपूजयेत् नक्षत्रदेवताइतिकेचित् मूलोक्तेनविधानेनकुंभयोरभिमंत्रणम् रुद्रार्चारुद्रकुंभेतुपूर्ववच्छेषमाचरेत् प
स्नानादिरूराधिदैवैर्द्यांतमित्यर्थः नमोअस्तुसर्पेभ्यः पूजामंत्रइतीरितः सर्पोरक्तस्त्रिनेत्रश्चद्विभुजःपीतवस्त्रकः फलकासि
दिव्याभरणभूषितः एवंध्यात्वाततोभ्यर्च्यहोमकर्मसमाचरेत् कर्तुःशाखोक्तमार्गेण आचार्यस्याथवाचरेत् मुखांतंकर्मनिर्मा
शाखतः इदंसर्पेभ्योजुहुयात्साधिप्रत्यधिदैवतम् इदंहविः अष्टोत्तरशतंवाथअष्टाविंशतिमेवच मूलनक्षत्रवच्छेषंहोमकर्म
हुत्यंतंकर्माणिकृत्वासंपातकंतथा पूर्णाहुत्यंतमित्युक्त्वारुद्रकुंभादौपुनःरुद्रादिजपोनास्ति कुंभेजलंचप्रक्षिप्यअभिषेकम
त्रसमेतस्ययजमानस्यपूर्ववत् अभिषिंचेत्तथाचार्योऋत्विग्भिःसहितस्तथा अभिमंत्रितकुंभाद्भिरभिषेचनमाचरेत् तथापो
ल्लुवैरभिषेचयेत् आश्लेषाऋक्षजातस्यमातापित्रोर्धनस्यच भ्रातृज्ञातिकुलस्थानांदोषंसर्वंव्यपोहतु १ योसौवागीश्वरोनाम अधि
तिः मातापित्रोःशिशोश्चैवगंडांतंचव्यपोहतु २ पितरःसर्वभूतानांरक्षंतुपितरःसदा सर्पनक्षत्रजातस्यवित्तंचज्ञातिबांधवान् एवंकृते।
सार्पशांतिर्भवेद्ध्रुवम् ततःशुक्लांबरधरोयजमानःस्रूभूषितः दक्षिणाभिस्ततोविप्रान्मूलवच्चप्रतोषयेत् भुक्तवद्भ्यश्चविप्रेभ्यः स्वीकुर्यादा
गृही इत्युक्तेनविधानेनसर्वारिष्टंव्यपोहति उत्तरपूजायामर्घ्यमाह सर्पाधीशनमस्तुभ्यंनागानांचगणाधिप गृहाणार्घ्यंमयादत्तंसर्वारिष्ट

तये मूलनक्षत्रवत्कुर्यात्सार्पगंडेस्वनामतः आश्लेषामूलगंडांतदोषमाशुव्यपोहत्वित्येवमूहः यद्वामूलगंडांतेयथा गंडांतशांतिर्भिन्ना एवमत्र
इतिशौनकोक्तआश्लेषाशांतिविधिः ज्योतिर्निबंधेतुविशेषउक्तः नागप्रतिकृतिंकुर्यात्सौवर्णीं पलमानतः अथवाशक्तितः कुर्याद्वित्तशाठ्यं वि
येत् कद्रुद्रायप्रचेतसइतिमंत्रविशेषतः नैवेद्यंस्यादामिषंचास्तिपूजादानकृतिःसमा अयुतंहवनंह्यत्रतिलैःसाज्यैःप्रधानकैः ब्रह्मवृक्ष
धःशतमष्टोत्तरंशुभा इति अथप्रयोगः द्वादशाहेजन्मर्क्षेन्यस्मिन्वाशुभेहनिगोमुखप्रसवंकृत्वायजमानः कृताभ्यंगोदेशकालौस्मृत्वा
स्यआश्लेषाजन्मर्क्षसूचितपित्राद्यरिष्टादिशांतिद्वाराश्रीपरमेश्वरप्रीत्यर्थमाश्लेषाजननशांतिंकरिष्ये इतिसंकल्प्य तदंगतयागणप
वाचन मातृकापूजननांदीश्राद्धाचार्यवरणानिकुर्यात् तत्रऋत्विजश्चाष्टौचत्वारोवा ततः आचार्योस्मिन्कर्मणि आचार्यकर्मकरि
ष्य यदत्रसंस्थितमितिसर्षपान्विकीर्य आपोहिष्ठेतिमंत्रैः कर्मभूमिंप्रोक्ष्य ईशानदेशेपंचवर्णैः स्वस्तिकंविरच्य तत्रैकंकलशंस्थापये
णप्रमाणाः आपोहिष्ठेतितृचेनपंचगव्यंतत्रक्षिपेत् ततोविभवेतस्मात्कलशाच्चतुर्दिक्षुचतुरःकलशान्स्थापयेत् ततः पूर्णपात्रोपरिस्थव
रुद्रप्रतिमांत्र्यंबकमितिमंत्रेणावाह्यपूजयेत् अस्यवसिष्ठोरुद्रोनुष्टुप् ततः एकऋत्विक्कुंभंस्पृष्ट्वारुद्रैकादशिनींजपेत् यदियाजुषोयज
ऋचश्चेच्चत्वारिरुद्रसूक्तानि छंदोगश्चेद्रुद्रसामानि रुद्रस्नाम्नोःएकादशाष्टत्रिद्व्येकसंख्याग्राह्या केचित्तुरुद्रःसर्वसाधारणोबह्वृचच्छंदोगयोरु
...स्याहुः इदमेवशिष्टाःकुर्वंति रुद्रसूक्तानितु कद्रुद्रायेतिघोरःकण्वोरुद्रोगायत्री इमारुद्रायतवसइत्येकादशर्चस्यर

...स्यद्वे अनुष्टुभौ आतेपितरितिपंचदशर्चस्यसूक्तस्यगृत्समदोरुद्रस्त्रिष्टुप् इमारुद्रायस्थिरधन्वनइतिचतसृणांच

त्रोजगत्योंत्यात्रिष्टुप् आवोराजानंवामदेवोरुद्रस्त्रिष्टुप् तमुष्टुहिभौमोत्रिरुद्रस्त्रिष्टुप् भुवनस्यपितरंऋजिश्वारुद्रस्त्रिष्टुप् त्र्यंबकंवसिष्ठो

ष्टुप् ततस्त्र्यंबकमितिमंत्रमष्टोत्तरशतंपावमानीश्चमध्यकुंभेजपेत् ततःप्राक्कुंभेआशुःशिशानइतित्रयोदशर्चस्यसूक्तस्यइंद्रोप्रतिरथ

द्रोदेवता बृहस्पतिस्त्रिष्टुप्छंदोंत्यानुष्टुप् दक्षिणकुंभेत्वमग्नेरुद्रइत्यनुवाकस्यहव्यवाड्ऋषिः अग्न्यात्मारुद्रोदेवता जगतीछंदः प

क्षणोइत्यस्यवामदेवोग्निस्त्रिष्टुप् उत्तरकुंभेरक्षोहणमितिपंचविंशर्चस्यसूक्तस्य आंगिरसःपायुस्त्रिष्टुप् अंत्याश्चतस्रोनुष्टुभः अ

रव्याशक्त्यायाद्या पंचकुंभासंभवेचतुःप्रस्थवणंपंचवल्कंकुंभंस्थापयित्वासर्वंतत्रैवकुर्यात् ततःकुंभोत्तरतश्चतुर्विंशद्दलपंकजंप

र्णिकायांकलशंस्थापयेत् तत्रयाःफलिनीरितिरत्नौषधीःक्षिपेत् ततःपूर्णपात्रोपरिसर्पप्रतिमामाश्लेषाप्रतिमांनमोअस्तुसर्पेभ्य

येत् ततःसर्पोरक्तस्त्रिनेत्रश्चाद्विभुजःपीतवर्णकः फलकासिधरस्तीक्ष्णोदिव्याभरणभूषितइतिसर्पंध्यात्वातद्दक्षिणेबृहस्पतेगृत्सम

स्पतिस्त्रिष्टुप् इतिमंत्रेणप्रतिमायांबृहस्पतिमावाह्यउत्तरतश्चउदीरतांशंखःस्वधास्त्रिष्टुप् अनेनप्रतिमायांपितृनावाह्यप्रागादितश्चतुर्वि

तिपंकजदलेषुपूर्वामारभ्यपुनर्वसुपर्यंतंनक्षत्राणितद्देवताआवाहयेत् यथाभगः १ अर्यमा २ सविता ३ त्वष्टा ४ वायुः ५ इंद्राग्नी ६ मित्रः ७ इं

८ निर्ऋतिः ९ आपः १० विश्वेदेवाः ११ विष्णुः १२ वसवः १३ वरुणः १४ अजैकपात् १५ अहिर्बुध्न्यः १६ पूषा १७ अश्विनौ १८ यमः १९ अग्नि

प्रजापतिः २१ सोमः २२ रुद्रः २३ अदितिः २४ इतिततोलोकपालानावाह्य पदार्थानुसमयेनकांडानुसमयेनवा पूजयेत् ततः आचार्योग्निंग्रहांश्च प्रति
ष्ठाप्यान्वादध्यात् अत्रप्रधानंनवग्रहान्प्रत्येकममुकसंख्याभिः समिच्चर्वाज्याहुतिभिरधिदेवताः प्रत्यधिदेवताश्चामुकसंख्याभिः समिच्चर्वाज्याहुति
भिर्विनायकादीन्लोकपालांश्च प्रत्येकंअमुकसंख्याभिः समिच्चर्वाज्याहुतिभिः प्रधानदेवतांसर्पान्प्रतिद्रव्यमष्टोत्तरशतसंख्याभिः पायसाहुतिभिः रु
द्रणंकृणुष्वेतिपंचदशार्ग्भिः प्रत्यृचमष्टसंख्याभिः कृसराहुतिभिः सवितारंदुर्गांत्र्यंबकंऋत्विक्स्तुतिंदुर्गांवास्तोष्पतिंअग्निंक्षेत्राधिपतिंमित्र
ग्निंएताः अष्टाष्टसंख्याभिः कृसराहुतिभिः श्रियंहिरण्यवर्णामितिपंचदशऋग्भिः प्रतिमंत्रमष्टसंख्याभिः सामिदाज्यचर्वाहुतिभिः सो
संख्याभिः पायसाहुतिभिः रुद्रंचतुर्गृहीतेनाज्येन अग्निंवायुंसूर्यंचाज्येनशेषेणास्विष्टकृतमित्यादिपूर्णपात्रनिधानांतंकृत्वा पायसकृ
यत्वाज्यभागांतंकुर्यात् ततोयजमानो दक्षिणतः सर्वादेवताउद्दिश्यत्यागंकुर्यात् ततोऋत्विक्सहितआचार्योहोमंकुर्यात् तद्यथा
देवताः प्रत्यधिदेवताः विनायकाद्याः लोकपालांश्च तत्तन्मंत्रैर्हुत्वासर्पेभ्योबृहस्पतयेपितृभ्यश्चतत्तन्मंत्रैर्द्रव्यचतुष्टयंहुत्वा भगादिचतुर्वि
भ्योष्टाष्टसंख्ययापायसंजुहुयात् कृणुष्वेतिपंचदशर्चस्य गौतमोवामदेवोरक्षोहात्रिष्टुप् कृसरहोमेविनियोगः गायत्र्याकृसरं जातवे
पोदुर्गात्रिष्टुप् कृसरहो॰ त्र्यंबकंवसिष्ठोरुद्रोनुष्टुप् कृसरहो॰ सीरायुजंतीत्यस्यबुधः सौम्यऋषिः ऋत्विक्स्तुतिर्देवता गायत्रीच्छंदः कृ
र्गात्रिष्टुप् कृसरहो॰ वास्तोष्पतेवसिष्ठोवास्तोष्पतिस्त्रिष्टुप् कृसरहो॰ अग्निंकाण्वोमेधातिथिरग्निर्गायत्री कृसरहो

पालोनुष्टुप् कृसरहोमे० गृणानाभार्गवोजमदग्निर्मित्रावरुणौगायत्री कृसरहो० अग्निंदूतंपुरोदधइत्यस्य आंगि
रूपोग्निर्गायत्री कृसरहो० हिरण्यवर्णामितिपंचदशर्चस्यसूक्तस्य आनंदकर्दमचिक्लीतेंदिरासुताऋषयः श्रीर्देवता आद्यास्तिस्रोनुष्टुभः
प्रस्तारपंक्तिः पंचमीषष्ठ्यौत्रिष्टुभौ ततोष्टावनुष्टुभः अंत्याप्रस्तारपंक्तिः होमेविनियोगः प्रत्यृचंसमिदाज्यचरूनष्टशताष्टाविंशत्यन्यतमं
जुहुयात् त्वन्नःसोमविश्वतइत्यस्यप्रगाथःसोमस्त्रिष्टुप् पायसहोमे० १३ त्वन्नःसोमविश्वतोगोपाइतिवामंत्रः त्वन्नःसोमसुक्रतुभि
योरैंद्रोविमदःसोमः प्रस्तारपंक्तिः यातेरुद्रेतिकश्यपोरुद्रः स्वराडनुष्टुप् चतुर्गृहीतमाज्यहोमेविनियोगः ततःस्रुवेणव्यस्तसमस्तव्
यंहुत्वास्विष्टकृदादिप्रायश्चित्तहोमांतेदिक्पालेभ्योनवग्रहेभ्योविनायकादिभ्यःसर्पेभ्योबृहस्पतयेपितृभ्योरुद्रायक्षेत्रपालायसदीप
नं दद्यात् ततःआचार्योयजमानोवाचतुर्गृहीतेनद्वादशगृहीतेनवापूर्णाहुतिंजुहुयात् तत्रमंत्राः समुद्रादूर्मिरित्येकादशर्चस्यसूक्त
वामदेवोग्निस्त्रिष्टुप् पूर्णाहुतिहोमे० प्रजापतेर्हिरण्यगर्भःप्रजापतिस्त्रिष्टुप् पूर्णादर्विविश्वेदेवाःशतक्रतुरनुष्टुप् सप्ततेअग्नेसप्तवाग्नि
पूर्णाहुतिहोमे० एतैर्मंत्रैःपूर्णाहुतिंहुत्वाप्रणीतानिनयनादिकर्मशेषंसमाप्यरुद्रंसर्पांश्चपंचोपचारैःसंपूज्यत्र्यंबकंमोषुणइत्युपस्थायसर्वकलश
पात्रांतरेगृहीत्वासर्त्विगाचार्योयजमानंसर्वौषधीभिरनुलिप्तांगंधृतनववस्त्रंधृतनववस्त्रांसपुत्रांतत्पत्नींचाभिषिंचेत् अक्षीभ्यामितिषण्णांकश्यप
विवृहायक्ष्मनाशोनुष्टुप् त्रिभिस्त्वंदेवेतिसप्तानांवसिष्ठऋषिः आद्यानांत्रयाणामग्निर्देवता ततश्चतुर्णांविश्वेदेवाः आद्यागायत्री द्वितीया

ष्टुप् ततस्तिस्त्रोगायत्र्योंत्येद्वे अनुष्टुभौ आपइद्वेतिसप्तर्षयोविश्वेदेवाअनुष्टुप् आपोहिष्ठेतिनवर्चस्यांबरिषःसिंधद्वीपआपोगायत्री पंचमीव
र्धमाना सप्तमीप्रतिष्ठा अंत्येद्वेअनुष्टुभौ सहस्राक्षेणेतिप्राजापत्योयक्ष्मनाशनोयक्ष्महात्रिष्टुप् अभिषेकेविनियोगः ततः योसौवज्रध
रोदेवोमहेंद्रोगजवाहनः सार्पजातशिशोर्दोषंमातापित्रोर्व्यपोहतु योसौशक्तिधरोदेवोहुतभुङ्मेषवाहनः सप्तजिह्वश्चदेवोग्निःसार्पदोषं
पोहतु योसौदंडधरोदेवोधर्मोमहिषवाहनः सार्पजातशिशोर्दोषंव्यपोहतुयमोमम योसौखड्गधरोदेवोनिर्ऋतीराक्षसाधिपः प्रशामय
दोषंगंडांतसंभवम् योसौपाशधरोदेवोवरुणश्चजलेश्वरः नक्रवाहःप्रचेतानोसार्पोत्थाघंव्यपोहतु योसौदेवोजगत्प्राणोमारुतो
ः प्रशामयतुसार्पोत्थंदोषंबालस्यशांतये योसौनिधिपतिर्देवःखड्गभृद्वाजिवाहनः मातापित्रोःशिशोश्चैवसार्पदोषंव्यपोहतु ये
देवःपिनाकीवृषवाहनः आश्लेषामूलगंडांतदोषमाशुव्यपोहतु विघ्नेशोक्षेत्रपोदुर्गालोकपालानवग्रहाः सर्वदोषप्रशमनंसर्वेकु
आश्लेषाऋक्षजातस्यमातापित्रोर्धनस्यच भ्रातृज्ञातिकुलस्थानांदोषंसर्वंव्यपोहतु योसौवागीश्वरोनाम अधिदेवोबृहस्पतिः म
शिशोश्चैवगंडांतंसंव्यपोहतु पितरःसर्वभूतानांरक्षंतुपितरःसदा सर्पनक्षत्रजातस्यवित्तंचज्ञातिबांधवान् रूराकस्त्वेत्यादिभि
स्यतच्छंयोःशंयुर्विश्वेदेवाःशक्वरी अभिषेकेविनियोगः ततःसर्वफलशोदकेनान्येनचशतच्छिद्रमंतर्धायाभिषिक्तोयजमानः आचा
[illegible] पिनेकृष्णमनड्वाहंरुद्रप्रतिमांचऋत्विग्भ्योयथाशक्तिदक्षिणांदत्वासर्पाणामुत्तरपूजनंविधायताम्रपात्रेफलपुष्प

...शनमस्तुभ्यंनागानांचगणाधिप गृहाणार्घ्यंमयादत्तंसर्वारिष्टप्रशांतये इत्यर्घ्यंदत्वा उत्तिष्ठेतिविसृज्यसंकल्पपूर्वकं
हस्तेप्रांतपाद्यार्घ्यंसंपूज्य गच्छगच्छेतिविसृज्ययथाशक्तिब्राह्मणान्भोजयित्वाशांतिजपंकारयित्वासुहृद्युतोभुंजीत इतिदिनकरभट्ट
सारे आश्लेषाशांतिप्रयोगः अथज्येष्ठाशांतिविधिः गर्गः घटिकैकाचमाद्यांतेज्येष्ठादौघटिकाद्वयम् तयोःसंधिरितिज्ञेयंशिशु
तम् प्रथमेचद्वितीयेचज्येष्ठायांचतृतीयके पादत्रयेजातनरोज्येष्ठायत्रप्रजायते ज्येष्ठांत्यपादजातस्तुपितुःस्वस्यचनाशनः जायते
दशाहाभ्यंतरेयथा ज्येष्ठर्क्षेचपुमान्जातःस्वाग्रजस्यविनाशनः ज्येष्ठर्क्षेकन्यकाजाताहंतिशीघ्रंधनाग्रजम् तस्माच्छांतिंप्रवक्ष्या
शांतये सुदिनेशुभनक्षत्रेचंद्रताराबलान्विते सूतकांतेतथाकुर्याज्ज्येष्ठाशांतिंविधानतः वज्रांकुशधरंदेवमैरावतगजान्वितम्
तिरम्यंदेवेंद्रंसुरनायकम् कर्षमात्रसुवर्णेनकर्षार्द्धेनाथपादतः तद्विधानंप्रकुर्वीतवित्तशाठ्यंनकारयेत् शालितंदुलसंपूर्णकुंभ
जयेत् इंद्रायेंद्रोमरुत्वेतइतिमंत्रेणवाग्यतः गंधपुष्पैर्धूपदीपैर्नानाभक्ष्यनिवेदनैः पूजयेद्विधिनाविप्रलोकपालगणान्वितम् रक्तव
पेतंपूजयेत्सुरनायकम् तत्रसंस्थापयेत्कुंभांश्चतुर्दिक्षुविशेषतः तन्मध्येस्थापयेत्कुंभंशतच्छिद्रसमन्वितम् पुण्योदकसमायुक्तंवस्त्रयुग्म
वेष्टितम् कुंभेषुविन्यसेद्धीमान्पंचगव्यंसमंत्रकम् पंचामृतंपंचरत्नंमृत्तिकाःपंचसंख्यकाः पंचवृक्षकषायांश्चपंचपल्लवकांस्तथा सुवर्ण
शद्दूर्वाश्चशतौषधिविनिक्षिपेत् पूरयेद्वारुणैर्मंत्रैःपंचकुंभान्प्रयत्नतः त्वन्नोअग्नेजपेदादौसत्वन्नोपिद्वितीयकम् समुद्रज्येष्ठाइतिच इ

मेगंगेचतुर्थकं पूजयेयुर्वस्त्रयुग्मैश्चतुरःकलशानपि पूजयेयुरितिबहुवचनादृत्विक्कर्तृकापूजा जपंकुर्युःप्रयत्नेनमंत्रैरेभिर्द्विजोत्तमा
आनोभद्राजपंचादौभद्राअग्नेद्वितीयकम् तृतीयंपुरुषसूक्तंकद्रुद्रायचतुर्थकम् आचार्योमूलमंत्रेणजपंकुर्याद्विशेषतः इंद्रसूक्तंरुद्रजाप
जपेन्मृत्युंजयंततः इंद्रंसंपूज्यदेवेंद्रंवरुणंकुंभसंस्थितम् सुसंकल्पविधानेनहोमकर्मततश्चरेत् समिद्भिर्ब्रह्मवृक्षस्यशतमष्टोत्तरंतथा
ष्टोत्तरसहस्रकमितिक्वचित्पाठः सर्पिषान्नरुणाचैवमूलमंत्रेणवाग्यतः हुनेज्ज्वाप्यंचतेनैवयतइंद्रभ्रयेतिच तिलान्व्याहृतिभिर्हुत्वा
नरंपृथक् भार्याशिशुसमोपेतंयजमानंविशेषतः अभिषेकंप्रकुर्वीतसूक्तैर्वारुणसंज्ञितैः समुद्रज्येष्ठादिभिर्मंत्रैरिमंमेवरुणस्त
गांत्येत्यादिभिर्मंत्रैरभिषेकंसमाचरेत् ज्योतिर्निबंधेघोषशीत्यादिभिर्मंत्रैरितिपाठः तन्मंत्रास्तुमहार्णवेप्रसिद्धाः अभिषेक
मानःसमाहितः शुक्लांबराणिधृत्वाथकुर्यादाज्यावलोकनम् रूपंरूपेतिमंत्रेणचित्रंतच्चक्षुरेववा देवतापुरतःस्थित्वाधूपदीपनै
दाचमनंसम्यक्तांबूलार्घ्यंतथैवच नमस्तेसुरनाथायनमस्तुभ्यंशचीपते गृहाणार्घ्यंमयादत्तंगंडदोषप्रशांतये आचार्यंच
रितंयत्फलंशुभम् लब्ध्वातुतत्फलंसम्यक्देवेंद्रायनिवेदयेत् आचार्यादिभिःकारितंयत्कर्मतज्जन्यंशुभमाचार्यादिभ्यःप्रतिगृह्येंद्रा
त् आचार्यायचगांदद्यात्सुशीलांचपयस्विनीम् रक्तवर्णांवस्त्रयुतांसर्वालंकारभूषिताम् वस्त्रयुग्मपिधानांचयथाविभवसारतः
शचीपते दानेनानेनदेवेशगंडदोषंविनाशय अनेनगांदद्यादित्यर्थः अष्टोत्तरशतसंख्यंकुर्याद्ब्राह्मणभोजनम्

...नत्यक्षमापयेत् अज्ञानाद्वाथवाज्ञानाद्वैकल्याद्वाधनस्यच यन्न्यूनमतिरिक्तंच तत्सर्वंक्षंतुमर्हसि अथप्रयोगः गो
सवंकृत्वादेशकालौसंकीर्त्य अस्यशिशोर्ज्येष्ठाजननसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंज्येष्ठाजननशांतिंकरिष्ये
ल्प्यगणपतिपूजनपुण्याहवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकुर्यात् ततःआचार्यःसर्षपविकिरणादिभूमिप्रोक्षणे
रिति भूमिंस्पृष्ट्वा ओषधयःसमितियवान्भूमौनिक्षिप्य आकलशेष्विति कलशंसंस्थाप्यशालितंदुलैः कलशंपूरयित्वापूर्णादर्वीतिपूर्णपात्रं
परिकर्षनदद्वार्ड्कल्पितामिंद्रप्रतिमामिंद्रायेंद्रोमरुत्वतइतिमंत्रेणवाग्यतःपूजयेत् पूजायांचवस्त्रद्वयंदद्यात् इंद्रभिन्नान्लोकपालान्
प्रपूजयेत् ततःपूर्वादिदिक्षुचतुरः कुंभान्मध्येशतच्छिद्रंसंस्थाप्य दिक्कुंभेषु पंचगव्यंपंचामृत पंचरत्नपंचमृत्तिकापंचवृक्षकषायपंचप
ादूर्वाः शतौषधीश्चक्षिप्त्वावस्त्रयुग्मेनवेष्टयित्वावरुणमावाह्यपूजयेत् पूजायांचवस्त्रद्वयंदद्यात् ततःपूर्वकलशेत्वन्नोअग्नइतिमंत्रेण
त्वंनोअग्नइतिपश्चात्समुद्रज्येष्ठेत्युत्तरं इमंमेगंगेइत्यभिमंत्रयेत् ततोऋत्विजश्चतुर्षुकुंभेषु आनोभद्राइतिसूक्तंभद्राअग्नेरितिसूक्तं
क्तंकद्रुद्रायेतिचसूक्तानिरुद्रंमृत्युंजयंचजपेयुः ततोग्निंग्रहांश्चप्रतिष्ठाप्यान्वादध्यात् अत्रप्रधानम् इंद्रंपलाशसमिदाज्यचरुद्रव्यैरष्टशतसं
या इंद्रायेंद्रोमरुत्वतइतिमंत्रेण प्रजापतिंतिलद्रव्येणाष्टशतसंख्यया व्याहृतिभिः शेषेणस्विष्टकृतमित्यादिहोमकाले इंद्रायेंद्रोमरुत्वतयतइंद्र
यामह इतिचमंत्रंजपेत् जपांतेबलिंपूर्णाहुतिं पूर्णपात्रविमोकंच कृत्वावरुणसूक्तैः समुद्रज्येष्ठेतिचतुर्भिरिमंमेवरुणेत्यनयाद्यौःशांतेतिवाभिषि

चेत् यजमानोरूपंरूपमित्याज्यमवलोक्यतत्पात्रंसदक्षिणंब्राह्मणायदत्वेंद्रंसंपूज्य नमस्तेसुरनाथायनमस्तुभ्यंशचीपते गृहाणार्घ्यंमयादत्तं
डदोषप्रशांतये इत्यर्घ्यंदद्यात् आचार्यादिभ्योजपहोमादिश्रेयो गृहीत्वातदिंद्रायसमर्प्याचार्यायरक्तवर्णवस्त्रद्वययुतांसवत्सांगांयक्षगंधर्वा
द्यैश्चपूजितोसिशचीपते दानेनानेनदेवेशगंडदोषंविनाशयेतिमंत्रेणदद्यात् ततःउत्तरपूजांविधायविसृज्यप्रतिमांदत्वाग्निंविसृज्यशतंब्रा
णान्भोजयित्वातेभ्योयथाशक्तिदक्षिणांदत्वेंद्रंप्रार्थयेत् अज्ञानादथवाज्ञानाद्वैकल्याद्वाधनस्यच यन्न्यूनमतिरिक्तंवातत्सर्वंक्षंतुम
मे इतिनारायणभट्टसुतश्रीमद्रामकृष्णभट्टसुतदिनकरभट्टकृतेशांतिसारेज्येष्ठाशांतिप्रयोगः अथवृद्धगर्गोक्तैकनक्षत्रजननं
एकस्मिन्नेवनक्षत्रेभ्रात्रोर्वापितृपुत्रयोः प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्यनिश्चयः भ्रात्रोर्भ्रातृभगिन्योरित्यर्थः पितृपुत्रयोः
त्रदुहित्रोरित्यर्थः तत्रशांतिंप्रवक्ष्यामिसर्वाचार्यमतेनतु शुभर्क्षेशुभवारेचचंद्रताराबलान्विते रिष्टविष्टिविवर्जेतुप्रारभेद्द्विवर्
चार्यंवरयेत्पूर्वंचतुरोथद्विजोत्तमान् पुण्याहंवाचयित्वातुशांतिकर्मसमाचरेत् अग्नेरीशानदिग्भागेनक्षत्रप्रतिमांततः तत्तद्दक्षोक्त
कलशोपरि नक्षत्रमंत्रावसिष्ठप्रोक्तेकात्यायनपरिशिष्टेउक्ताः अत्रनक्षत्रंतद्दैवतंच पूजयेत् वक्ष्यमाणज्योतिर्निबंधवचनात् रक्तव
द्यवस्त्रयुग्मेनवेष्टयेत् स्वशाखोक्तेनमार्गेणकुर्यादग्निमुखंततः अनेनैवतुमंत्रेणहुनेदष्टोत्तरंशतं तत्तद्दक्षोक्तेनेत्यर्थः प्रत्येकंसमि
अभिषेकंततःकुर्यादाचार्यःपितृपुत्रयोः इत्यत्रापितृग्रहणमुपलक्षणम् यन्नक्षत्रेजन्मतेनसहबालस्याभिषेकइ

[illegible]राचार्यंपूजयेत्पुनः ऋत्विजांदक्षिणांदद्यान्माषत्रयसुवर्णकम् देवताप्रतिमादानंधान्यवस्त्रादिभिःसह यानशय्या
दीनिदद्याद्दोषप्रशांतये भोजयेद्ब्राह्मणान्सर्वान् वित्तशाठ्यविवर्जितः इत्येकनक्षत्रजननशांतिविधिः अथप्रयोगः मातापितृनक्षत्रे
मुखप्रसवंकृत्वा भ्रातृनक्षत्रेसत्तोनमकृत्वादेशकालौसंकीर्त्यास्यशिशोःपित्रादिनक्षत्रोत्पत्तिसूचितसकलारिष्टनिरसनद्वाराश्रीपरमेश्व
पित्रादिनक्षत्रजननशांतिंकरिष्ये इतिसंकल्प्य गणपतिपूजन पुण्याहवाचन मातृकापूजन नांदीश्राद्धाचार्यर्त्विग्वरणानिकुर्यात् ऋत्विज
तः आचार्यःसर्षपान्विकीर्य भूमिंप्रोक्ष्याग्न्यायतनादीशान्यांकलशंसंस्थाप्य पूर्णपात्रोपरिजन्मर्क्षप्रतिमांतद्दक्षमंत्रेण पूजयेत् पूजां
शंश्वेतंचवस्त्रयुग्मंदद्यात् ततोग्निंग्रहांश्चप्रतिष्ठाप्य अन्वादध्यात् अत्रप्रधानंअमुकनक्षत्रंतद्देवतांवासमिच्चर्वाज्यैः प्रत्येकमष्टशत
षेण स्विष्टकृतमित्यादिबलिदानांते पूर्णाहुतिंप्रणीताविमोकादिचकृत्वा कलशजलेनाभिषिच्याचार्याय वस्त्रालंकारगाः ऋत्विग्भ्यश्चमो
रिमितंसुवर्णंदत्वाउत्तरपूजांकृत्वा प्रतिमांविसृज्याचार्यहस्ते प्रतिपाद्याचार्याय यथाशक्तिधान्यवस्त्रयानशय्यासनानिदत्वाचार्यर्त्विजो भो
येदिति इतिश्रीमद्दिनकरभट्टकृते शांतिसारे एकनक्षत्रजननशांतिप्रयोगः अथज्योतिर्निबंधोक्तएकनक्षत्रशांतिविधिः समानभेयदा
देवि पितापुत्रौचसोदरौ भगिन्यौवास्वबंधूवातदापूर्वस्यनाशनम् एकस्मिन्नेवनक्षत्रे पुत्रयोःपितृपुत्रयोः प्रसूतयोस्तयोर्मृत्युर्भवेदेकस्यनि
श्चयः विधानंतत्रकर्तव्यंजन्मनक्षत्रपूजनम् नक्षत्रदेवतापूज्यात्वधिप्रत्यधिपूर्वकम् यस्यऋक्षस्यययद्द्रव्यंदक्षिणाविधिमंत्रणम् तत्तत्तच्चविधा

व्यमृक्षदैवततुष्टये स्वगृह्योक्तविधानेनहवनंतत्रकारयेत् भक्त्याहरिहरौदेवौस्वर्णरूप्यमयौशुभौ ततोमूर्तिदानमंत्रः विविधस्यास्यविश्व
स्यपितरौविश्वतोसुखौ प्रीयेतांमूर्तिदानेनदेवौहरिहराबुभौ दानंहोमविधिःपश्चान्नादेनचाभिषेचनम् अभिषेचनपूर्वांच विप्रपूजास्मृताशिवे
तोभिगम्यगोविंदंशूलिनोश्चनिकेतनम् तूर्याणांचनिनादेनजयघोषेणपार्वति पूजाविधिंसमाप्यैवंसर्वोपस्करसंयुतम् प्रार्थयेद्देवदेवेशौलक्ष्मी
शैलसुतेश्वरौ दंडवत्प्रणिपातेनवंदनीयौपुनःपुनः ततःस्वगृहमागत्यब्राह्मणान्भोजयेत्सुधीः तोषयेद्दक्षिणादानैर्यथाशक्त्यावरानने एवंकृ
तेनतुविघ्ननाशोभवेद्ध्रुवम् अथशौनकोक्तव्यतीपातादिशांतयः अथातःसंप्रवक्ष्यामिशौनकःशांतिमुत्तमाम् कुमारजन्मकालेतुव्यतीप
तिः संक्रमश्चरवेस्तत्रजातोदारिद्र्यकारकः संक्रमशब्देनसंक्रमकालात्पूर्वाः पराश्चषोडशघटिकागृह्यंते द्वात्रिंशद्दंडैःसंपूर्णसूर्यमंडल
तरप्रवेशात् दरिद्रंचमहादुःखंव्याधिपीडामहद्भयम् अश्रियंमृत्युमाप्नोतिनात्रकार्याविचारणा स्त्रीणांचदुःखंशोकंचसर्वनाशकरोभवे
पुष्कलाकार्यातत्रदोषोनकश्चन गोमुखप्रसवंकुर्याच्छांतिंकुर्यात्प्रयत्नतः जपाभिषेकदानैश्चहोमाद्यपिविशेषतः नवग्रहमखंकुर्यात्तस्य
प्रथमंगोमुखाज्जन्मततःशांतिंसमारभेत् अनेनपाठादेवप्राथम्येसिद्धेपुनःप्राथम्यविधानंइतरशांतिषुप्राथम्यंनियतमित्येतदर्थः गृह
ग्भागेगोमयेनोपलिप्यच अलंकृतेचदेशेतुव्रीहिराशिंप्रकल्पयेत् पंचद्रोणमितंधान्यंतदर्द्धंतंदुलेनतु तदर्द्धंतुतिलैःकुर्यादन्योन्योपरिकल्प
...ष्टदलंलिखेद्बुधः पुण्याहंवाचयित्वातुआचार्यंवरयेत्सुरा राशिकल्पनात्पूर्वम् आचारवंतंधर्मज्ञंकुलीनंचकुटुंबिनम् मंत्रमंत्रार्थत

...दम् पंचांगभूषणंदद्यात्सद्वस्त्रांगुलीयकम् राशौप्रतिष्ठितंकुंभमव्रणंसुमनोहरम् तीर्थोदकेनसंपूर्यसमृदोषधिपल्लवम् स...
रत्नंचवस्त्रयुग्मेनवेष्टयेत् तस्योपरिन्यसेत्पात्रंसूक्ष्मवस्त्रेणसंयुतम् प्रतिमांस्थापयेद्धीमान्साधिप्रत्यधिदेवताम् चंद्रादित्याकृतीपार्श्वेमध्ये
र्चयेत् वैधृतिंतद्देवतारुद्रंइदंवैधृतिशांतौ मध्येरुद्रस्तद्दक्षिणोत्तरयोः सूर्यचंद्रावित्यर्थः व्यतीपातसंक्रमशांतौतुमध्येसूर्यस्तद्दक्षिणोत्त
रुद्रावित्याह एवमेवव्यतीपातेशांतौसंक्रमणस्यच भानोरुत्तरतोरुद्रमग्निंदक्षिणतोयजेत् निष्कमात्रेणवार्द्धेनपादेनापिस्वशक्तितः प्र
द्धीमांस्तत्तल्लक्षणलक्षिताम् रुद्रसूर्यौलक्षणयुक्तौ केचित्तुअंगप्रतिमास्वप्येतन्मानम् प्रतिमापूजनार्थायवस्त्रयुग्मंनिवेदयेत् अधिदे
चंद्रः प्रत्यधिदेवतम् इदंवैधृतिशांतौ तत्तद्व्याहृतिपूर्वेणतत्तन्मंत्रेणपूजयेत् त्र्यंबकेनमंत्रेणप्रधानप्रतिमांयजेत् अंगत्वेप्यनेनैवपूजा
त्रेणसूर्यपूजांसमाचरेत् प्रधानत्वेंगत्वेच आप्यायस्वेतिमंत्रेणसोमपूजांसमाचरेत् उपचारैःषोडशभिर्यद्वापंचोपचारकैः अर्चितंगंधपुष्पा
नैवेद्यमर्पयेत् मृत्युंजयेनमंत्रेणप्रधानप्रतिमांस्पृशन् अष्टोत्तरसहस्रंवाअष्टोत्तरशतंतुवा अष्टाविंशतिनावाथप्रजप्यस्वस्वशक्तितः सव
प्रजप्याथसोमार्थंसोममंत्रतः आनोभद्रेतिसूक्तंचभद्राअग्नेश्चसूक्तकम् जपेच्चपौरुषंसूक्तंत्र्यंबकमतःपरम् कुंभंस्पृष्ट्वाचतुर्दिक्षुजपंकुर्युस्त
र्त्विजः चतुर्दिक्षुचत्वारिसूक्तानीत्यर्थः केचित्तुएकैकस्यजपमाहुः कुंभस्यपश्चिमेदेशेस्थंडिलेग्निंप्रकल्पयेत् स्वगृह्योक्तविधानेनकारयेत्संस्कृता
लम् त्र्यंबकेनमंत्रेणसमिदाज्यचरूनृहुनेत् अष्टोत्तरसहस्रंवाअष्टोत्तरशतंतुवा अष्टाविंशतिंवाकुर्यात्स्वस्यवित्तानुसारतः सूर्यचंद्रयोःप्रधानत्वे

त्संख्या मृत्युंजयेनमंत्रेणतिलहोमंसमाचरेत् सर्वशांतिष्वयंहोमः ततःस्विष्टकृतंहुत्वाअभिषेकंचकारयेत् समुद्रज्येष्ठासूक्तेन आपोहिष्ठात्र्यृचेन
अक्षीभ्यामितिसूक्तेनपावमानीभिरेवच त्रैयंबकेनउत्सूर्य आप्यायस्वेतिमंत्रतः सुरास्त्वामितिमंत्रेणअभिषेकंसमाचरेत् आचार्यंपूजयेत्सम्यग्वा
स्त्रहेमांगुलीयकैः गोदानंवस्त्रदानंचहेमदानंविशेषतः तद्दोषशमनार्थायआचार्यायनिवेदयेत् श्वेतवस्त्रधरोभूत्वाभूषणाद्यैरलंकृतः यजमान
स्त्रियायुक्तोआज्यावेक्षणमाचरेत् प्रच्छादनपटंदद्यात्ततःशांतिर्भविष्यति जापकेभ्योब्राह्मणेभ्योदक्षिणाभिश्चतोषयेत् जापकेभ्योऋत्विग्भ्य
धकृपणेभ्यश्चप्रदद्याद्भूरिदक्षिणाम् ब्राह्मणान्छतसंख्याकान्मिष्टान्नैर्भोजयेच्चतान् तानृत्विजश्चेत्यर्थः बंधुभिःसहभुंजीतयथाविभव
यंयःकुरुतेमर्त्योनैवदुःखमवाप्नुयात् आयुरारोग्यमैश्वर्यंमातापित्रोःशिशोरपि सर्वदुःखनिवृत्तिश्चपुत्रपौत्रप्रवर्धनम् सर्वान्कामानवा
खीभूत्वाचिरंवसेत् इतिशौनकोक्तव्यतीपातादिशांतिविधिः अथप्रयोगः गोमुखप्रसवंकृत्वादेशकालौसंकीर्त्यास्यशिशोर्वैधृतिजन
कलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंवैधृतिजननशांतिंकरिष्ये इतिसंकल्प्य व्यतीपातादौतुनत्संकल्पः व्यतीपातवैधृत्योः स
तेशांतिद्वयंएकत्ररुद्रप्राधान्यादपरत्रसूर्यप्राधान्यात् यदातुव्यतीपातेसंक्रमस्तदाव्यतीपातामावास्याश्राद्धयत्तंत्रम् ततोगणपतिपूजं
हवाचनमातृकापूजननांदीश्राद्धाचार्यर्त्विग्वरणानिकुर्यात् ततःआचार्यःसर्षपान्विकीर्यभूमिंप्रोक्ष्यपूर्वस्यांगोमयेनोपलिप्यतत्रपंच
[illegible] परिसार्द्धद्रोणद्वयमिततंदुलराशिंकृत्वातदुपरिसपादद्रोणमिततिलराशिंकृत्वाराशिमस्तकंसमंकृत्वातत्रपंचरंगेर

[illegible]कुंभंप्रतिष्ठाप्यतीर्थजलेनापूर्यतत्रसप्तमृत्तिकासर्वौषधिपंचपल्लवपंचगव्याष्टगंधपंचरत्नानिप्रक्षिप्यवस्त्रयुग्मेनावेष्ट्यपू

निधायतदुपरिसूक्ष्मवस्त्रेदेवताःस्थापयेत् तत्रवैधृतिशांतौत्र्यंबकमितिमंत्रेणमध्येरुद्रम् तद्दक्षिणतउत्सूर्यइतिमंत्रेणसूर्यमुत्तरतश्च

तिसोमम् व्यतीपातसंक्रमशांतौतुउत्सूर्यइतिमध्येसूर्यंतद्दक्षिणतोग्निंदूतमित्यग्निमुत्तरतश्चत्र्यंबकमितिरुद्रम् सर्वत्रमंत्राःव्याहृ

विधायरुद्रप्रतिमांस्पृशन्मृत्युंजयमंत्रंसबीजमष्टसहस्राष्टशताष्टाविंशतिसंख्यययायथाशक्तिवाजपेत् ततःसूर्यप्रतिमांस्पृशन् सू

रमंत्रान्जपेत् तेच उदुत्यमितित्रयोदशर्चस्यसूक्तस्यकण्वपुत्रःप्रस्कण्वोनवाद्यागायत्र्योंत्याश्चतस्रोनुष्टुभः चित्रंदेवानामितिषडर्चे

सःसूर्यस्त्रिष्टुप् इंद्रंमित्रमितिद्वयोरौचथ्योदीर्घतमास्त्रिष्टुप् हंसःशुचिषदित्येकस्यागौतमपुत्रोवामदेवोजगती यत्वासूर्येत्येकस्याप

ष्टुप् यदद्यसूर्येत्येकस्याउत्सूर्यइतितिसृणांउद्वेतिसार्धचतसृणांमैत्रावरुणिर्वसिष्ठस्त्रिष्टुप् उदुत्यद्दर्शनमितिबृहती शीर्ष्णइतिसत

न्नचक्षुरितिपुरउष्णिक् बण्महांअसीतिद्वयोर्भृगुपुत्रोजमदग्निःपूर्वाबृहती उत्तरासतोबृहती नमोमित्रस्येतिद्वादशर्चस्यसूक्तस्यसूर्यःपु

पाःसूर्योजगती शन्नोभवेतित्रिष्टुप् सूर्योनोदिवइतिपंचर्चस्यसूर्यपुत्रश्चक्षुर्गायत्री विभ्राड्बृहदितिचतसृणांसूर्यपुत्रोविभ्राड्जगती विभ्रा

मित्यस्तारपंक्तिः आयंगौरितित्रिसृचस्यस्वयंभूःसार्पराज्ञीःसर्पागायत्री सर्वेषांसूर्योदेवता ततःसोमप्रतिमांस्पृशन्नाप्यायस्वेतिजपेत् व्यतीपा

संक्रमशांतौपूर्वंसूर्यजपस्ततोमृत्युंजयजपः अग्निजपोनास्ति ततश्चतुर्दिक्षुऋत्विजःकुंभंस्पृष्ट्वाआनोभद्राइतिसूक्तंपुरुषसूक्तंत्र्यंबकमंत्रं

जपेयुः केचित्तु एकैकस्यां दिशि एकैकसूक्तमभिनिवदंति ततः आचार्योभिं ग्रहांश्च प्रतिष्ठाप्य अन्वादध्यात् रुद्रं अष्टसहस्राष्टशतान्यतरसंख्ययास
दाज्यचरुद्रव्येण व्यतीपातसंक्रमयोस्तु सूर्यरुद्रसंख्ययाग्निरुद्रौ चाष्टाविंशतिसंख्यया मृत्युंजयं तिलद्रव्येण अष्टसहस्राष्टशताष्टाविंशत्यन्यतर
ख्यया शेषेण स्विष्टकृतमित्यादि मृत्युंजयहोमो व्यतीपातादावपि बलिदानांते पूर्णाहुतिं हुत्वा समुद्रज्येष्ठा इति सूक्तेन आपोहिष्ठेति च्यृचेन अक्षी भ्यु
ति सूक्तेन पावमानीभिः प्रधानदेवतामंत्रैः सुरास्त्वेत्यादि पौराणैश्चाभिषिंचेयुः ततो यजमानोभिषेकवस्त्रमाचार्याय दत्वा स्त्रीबालयुक्तो रूपं
माज्यमवेक्ष्य तत्पात्रं सदक्षिणं ब्राह्मणाय दत्वाचार्याय वस्त्रद्वयं गां हेमांगुलीयकं यथाशक्ति स्वर्णं प्रच्छादनपटं च दत्वा ऋत्विग्भ्यश्च यथा
न्यकीमन्ये भ्यश्च भूरिदक्षिणां दत्वोत्तरपूजां कृत्वा विसृज्याचार्यहस्ते प्रतिपाद्याग्निं विसृज्य शतं ब्राह्मणान् ऋत्विजश्च भोजयेदिति इति दि
त शांतिसारे व्यतीपातादिशांतिप्रयोगः अथ गर्गोक्तनक्षत्रगंडांतशांतिविधिः अश्विनीमघमूलादौ त्रिषट्कनवनाडिकाः रेवतीसार्प
साश्च ऋतुसायकाः प्रकारांतरेण गंडांतमाह अश्विनीमघमूलादौ नाडिकाद्वितयं तथा रेवतीसार्पशाक्रांते नाडिकाद्वितयं तथा अ
लानां पूर्वार्द्धे बाध्यते पिता पूषाहिशक्रपश्चार्द्धे जननी बाध्यते शिशोः पितृघ्नश्च दिवाजातो रात्रिजातस्तु मातृहा दिवाजातो द्विपतितं
इत्यर्थः एवं रात्रिजातः आत्मघ्नः कुसंध्ययोर्जातो नास्ति गंडे निरामयः सर्वेषां द्वंद्वजातानां परित्यागो विधीयते वर्जयेद्दर्शनं त्वावंतच्च षाण्मा
...भ्यामि सोममंत्रेण भक्तिमान् कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्वनम् अष्टाभिर्वा चतुर्भिर्वा द्वाभ्यां वा शोभनं तथा तन्म

...नं राजतंचंद्रमर्चयेत्तु सितपुष्पसहस्रकैः दैवज्ञः क्षौमवासास्तु शुक्लमाल्यांबरान्वितः सोमोयमितिसंचिंत्य आप्यायस्वेति
जपत्साहस्रकमंत्रं श्रद्दधानःसमाहितः यद्याद्दक्षिणामिष्टांगंडदोषप्रशांतये शुक्लंवागीश्वरंचैवताम्रपात्रसमन्वितम् गंडदोषोपशां
द्वेदविद्भुविः इतिगंडांतशांतिविधिः ज्योतिर्निबंधेतु ब्रह्मपुराणोक्तत्वेनैतानेवश्लोकान्पठित्वा कुंकुमंचंदनंकुष्ठंगोरोचनमथापिवा
कुंभेषुचतुर्षुप्रक्षिपेत्क्रमात् सहस्राक्षेणमंत्रेणबालकंस्नापयेत्क्रमात् पितृयुक्तंदिवाजातंमातृयुक्तंतुरात्रिजम् स्नापयेत्पितृमातृभ्
भयोरपि कांस्यपात्रंघृतैःपूर्णंगंडदोषोपशांतये सक्षीरमौक्तिकंशंखंश्वेतवस्त्रयुगंशुभम् यजुर्वेदविदेदद्याद्गंडदोषापनुत्तये दद्य
यहांश्चापिप्रपूजयेत् आयुर्वृद्धिकरंजप्त्वाकुर्याद्ब्राह्मणतर्पणम् तिथिगंडादौतुगर्गः तिथिगंडेत्वनड्वाहं नक्षत्रेधेनुरुच्यते कांच
डदोषोविनश्यति इतिनक्षत्रगंडांतशांतिविधिः अथप्रयोगः गोमुखप्रसवंकृत्वादेशकालौसंकीर्त्यास्यशिशोरमुकनक्षत्रगंडांतो
सकलारिष्टनिरसनद्वाराश्रीपरमेश्वरप्रीत्यर्थंनक्षत्रगंडांतशांतिंकरिष्ये इतिसंकल्प्य तदंगतयागणपतिपूजनपुण्याहवाचननांदीश्राद्ध
त्वाचार्यंवृत्वातं शुक्लैःक्षौमवस्त्रमाल्यैरर्चयेत् ततःआचार्यःसर्षपविकिरणभूमिप्रोक्षणेकृत्वाषोडशभिरष्टाभिश्चतुर्भिर्वाद्वाभ्यांवापलैःका
पात्रंकृत्वातत्पायसेनपूरयित्वा तत्रनवनीतपूरितशंखंपूर्वाग्रंनिधायतन्मुखेराजतींचंद्रप्रतिमांआप्यायस्वेतिमंत्रेणषोडशोपचारैःसंपूज्यसित
पुष्पसहस्रत्रयेण ३००० पुष्पांजलिंदत्वातदुत्तरतस्ताम्रपात्रेबृहस्पतिप्रतिमांतन्मंत्रेणार्चयेत् ततोयजमानःप्रतिमामाचार्यायदत्वायथाशक्तिद

क्षिणांचदद्यात् इतिदिनकरभट्टकृतेशांतिसारेनक्षत्रगंडांतशांतिप्रयोगः अथोत्तरादिशांतिविधिः उत्तरातिष्यचित्रासुपूर्वाषाढोद्भवस्यच शु
र्याच्छांतिंप्रयत्नेन नक्षत्राकारजांबुधः सुवर्णेनतदर्द्धेनयथावित्तानुसारतः नक्षत्राधिपतेरूपंकृत्वावस्त्रद्वयान्वितम् वरुणस्यार्चनंकार्यंस्वस्ति
वाचनपूर्वकम् कुंभेवरुणमभ्यर्च्यपूर्णपात्रोपरिनक्षत्राधिपतिंपूजयेदित्यर्थः शतोषधानिनिक्षिप्यमृत्त्वक्पल्लवसंयुतम् पूजांतेसमिदन्नाज्यैर्हो
तिलयवैस्तथा ततःपूर्णाहुतिंहुत्वावेदाध्यायिकुटुंबिने उत्तराप्रथमेपादेतिलपात्रंतथैवच तिष्येतुगांसवत्सांचसुशीलांचपयस्विनीम् अ
वेदद्यात्पूर्वाषाढेतुकांचनम् यवांश्चव्रीहिमाषांश्चतिलमुद्गान्प्रदापयेत् यथावित्तानुसारेणकुर्याद्ब्राह्मणभोजनम् पितुरायुष्यवृ
त्रविधीयते अथदिनक्षयादिशांतिविधिः दिनक्षयेव्यतीपातेव्याघातेविष्टिवैधृतौ शूलेगंडेतिगंडेचपरिघेयमघंटके कालदंडेमृत्यु
योगेसुदारुणे तस्मिन्गंडदिनेप्राप्तेप्रसूतिर्यदिजायते विचार्यतत्रदैवज्ञःशांतिंकुर्याद्यथाविधि यजनंदेवतानांचग्रहाणांचैवपूज
वक्ष्यमाणं दीपंशिवालयेभक्त्याघृतेनपरिदापयेत् अभिषेकंशंकरस्यअश्वत्थस्यप्रदक्षिणम् आयुर्वृद्धिकरंजाप्यंसर्वारिष्ट
गुरुदैवतविप्राणांपूजनंगोत्रवर्द्धनम् गाणपत्यंपुरुषसूक्तंसौरंमृत्युंजयंशुभम् शांतिजाप्यंरुद्रजाप्यंकृत्वामृत्युंजयीभवेत् मूलेवा
कुर्यादेतानियत्नतः एतेषांमूलव्यतीपातादिशांत्यासमुच्चयः अथविषघटिकाशांतिविधिः विषनाड्योज्योतिर्निबंधे तिथीषुनागाद्रि
...कदिक्कभास्कराः मुनीभसंख्याप्रथमातिथेःक्रमात्परंविषाख्यंघटिकाचतुष्टयम् विशाच्चतुर्द्वादशदिक्कशैल

२० ४ १२ १० ७ ५ २५ सूर्यादिवारेषु भवंस्यनंतरं नाड्योविषाख्यं घटिकाचतुष्टयम् नारदः खमार्गणा ५० वेद
खरामा ३० व्योमसागराः ४० वार्धिचंद्रा १४ रूपदस्राः २१ खरामा ३० व्योमबाहवः २० द्विरामाः ३२ खाग्नयः ३० शून्यदस्राः २० कुंजरभूमय
पपक्षा २१ व्योमदस्रा २० वेदचंद्रा १४ श्चतुर्दश १४ शून्यचंद्रा २० वेदचंद्राः १४ षडक्षा ५६ वेदबाहवः २४ शून्यदस्रा २० शून्यचंद्राः १० पूर्णचं
द्रवः १८ तर्कचंद्रा १६ वेदपक्षाः २४ खरामा ३० श्चाश्विभात्क्रमात् आभ्यः परास्फ घटिकाश्चतस्रोविषसंज्ञिताः वृद्धगर्गः विषनाडीषु
र्वारिष्टभयप्रदः पितृमातुलमात्मानं घातयेन्नात्रसंशयः मातुश्चविषशस्त्रास्त्रैः क्रूरेलग्नेंशकेपिवा तद्दोषपरिहाराय शांतिकर्मसमा
मोग्निर्मृत्युश्च देवताः परिकीर्तिताः स्वर्णेनयथाशक्त्यातत्तल्लक्षणलक्षिताः प्रतिमाः कारयित्वातु आढक्यव्रीहिभिः स्थले स्थंडिल
कुंभमौषधिसंयुतम् जलैः संपूर्णसंस्थाप्यमृदादिप्रक्षिपेत्ततः आढक्यव्रीहिभिः कुंभस्थलंपरिकल्पयेदित्यन्वयः वस्त्रद्वयेनसंवेष्ट्य
निक्षिपेत् कुंभोपरितुसंस्थाप्यचतस्त्रः प्रतिमास्तथा तत्तत्तैश्च मंत्रैश्चक्रमादर्चेद्धुनेत्तथा समिच्चरुघृतद्रव्यैः प्रत्येकंचयथाक्रमात् क्रोश
सहाचार्यो हुनेदष्टसहस्रकम् अष्टोत्तरशतंवाथअष्टाविंशतिमेववा ततस्तिलैर्हुनेद्देवांस्तत्तन्मंत्रैश्चकृत्यवित् ततोभिषिंचयेद्दानंमंत्रैः पौरा
णिकैः क्रमात् वक्ष्यमाणमंत्रैर्दानंकुर्यादित्यर्थः प्रीयतांभगवानीशः पिनाकीसर्वतोमुखः तवमूर्तिप्रदानेनममपापंव्यपोहतु दंष्ट्राकरालवदनो
नीलांजनसमाकृतिः रक्तसिक्तगदापाणिर्मृत्योर्मापातुसर्वदा दानमेवंविधैर्मंत्रैर्यथाविधिसमाहितः गोभूहिरण्यवस्त्रैश्च आचार्यंपूजयेत्सु

धीः एवंकुर्याद्विधानेनविषदोषःप्रशाम्यति इतिविषघटिकाशांतिविधिः अथग्रहणजननशांतिः शौनकः ग्रहणेचंद्रसूर्यस्यप्रसूतिर्यदि द्व
ते व्याधिपीडातदास्त्रीणामादौतुऋतुदर्शनात् इत्थंसंजायतेयस्तुतस्यमृत्युर्नसंशयः व्याधिःपीडाचदारिद्र्यंशोकश्चकलहोभवेत् शांतिं
षांप्रवक्ष्यामिनराणांहितकाम्यया यस्मिन्नृक्षेविशेषेणग्रहणंयदिजायते तन्नक्षत्राधिपंरूपंस्वर्णेनप्रकल्पयेत् ऋक्षाधिपस्यरूपमित्यर्थः
यथाशक्त्यानुरूपेणवित्तशाठ्यंनकारयेत् सूर्यग्रहेसूर्यरूपंहिरण्येनस्वशक्तितः चंद्रंचंद्रग्रहेधीमान्रजतेनविशेषतः राहोरूपंप्रकु
नैवविचक्षणः नागेनसीसेन शुचौदेशेप्रयत्नेनगोमयेनोपलेपयेत् तस्योपरिन्यसेद्धीमान्नवंवस्त्रंसुशोभनम् त्रयाणांचैवरू
नंतत्रकारयेत् रक्ताक्षतंरक्तगंधंरक्तपुष्पांबराणिच सूर्यग्रहेप्रदातव्यंसूर्यप्रीतिकरायच प्रीतिकरणायेत्यर्थः श्वेतवस्त्रंश्वेत
गंधानुलेपनम् चंद्रग्रहेप्रदातव्यंचंद्रप्रीतिकरायच राहवेचैवदातव्यंकृष्णापुष्पांबराणिच दद्यान्नक्षत्रनाथायराहुप्रीतिकराय
जयेद्धीमानाकृष्णेनेतिमंत्रतः चंद्रग्रहेतथासम्यगाप्यायस्वेतिमंत्रतः स्वर्भानोरितिमंत्रेणराहुंयत्नेनपूजयेत् एवंसंपूजयेद्धीम
र्कसंभवैः सूर्यग्रहइत्यर्थः चंद्रग्रहेचपालाशसमिद्भिर्जुहुयात्ततः दूर्वाभिर्जुहुयाद्धीमान्राहोःसंप्रीणनायच समिद्भिर्ब्रह्मवृक्षस्य
ग्राद्ब्धः आज्येनचरुणाचैवतिलैश्चजुहुयात्ततः त्रिभ्यइत्यर्थः पंचगव्यैःपंचरत्नैःपंचत्वक्पंचपल्लवैः जलैरौषधकल्कैश्चसहितैःकलशै
...नेप्रयत्नतः मंत्रैर्वारुणसंभूतैरापोहिष्ठादिभि स्त्रिभिः इमंमेगंगेइत्यादितत्वायामीतिमंत्रकैः अभिषेकेनि

[illegible] आचार्यं पूजयेत्सम्यक्सुशांतो विजितेंद्रियः तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयम् गां चैव दक्षिणां दद्याद्यजमान
हितः इत्थं ग्रहणजातानां सर्वारिष्टविनाशनम् कथितं भार्गवेणेदं शौनकाय महात्मने इति ग्रहणप्रसूतशांतिः अथ कात्यायनोक्तयमल
तिः अथातो यमलजनने प्रायश्चित्तविधिं व्याख्यास्यामो भार्या गौर्दासी महिषी वडवा वा विकृतिं प्रसवेत्प्रायश्चित्ती भवेत्पूर्णे दशाहे चतुर्णां क्षीरवृ
यमुपसंहरेत्प्लक्षवटोदुंबराश्वत्थशमीदेवदारुगौरसर्षपास्तेषां मिश्रमपो हिरण्यदूर्वांकुराम्रपल्लवैरष्टौ कलशान्प्रपूर्य सर्वौषधीनां दंप
आपो हि ष्ठेति तिसृभिः कयानश्चित्र इति द्वाभ्यां पंचैं द्रोणं पंचवारुणेनेदमापः प्रवहतेत्यपाघमिति स्नापयित्वालंकृत्य ततो दर्भेषूपवेश्यत
ीपाकं श्रपयित्वाज्यभागाविष्ट्वाज्याहुतीः पूर्वोक्तैः स्नपनमंत्रैः स्थालीपाकस्य जुहोति अग्नये स्वाहा सोमाय स्वाहा पवमानाय स्वाहा
मारुताय स्वाहा मरुद्भ्यः स्वाहा यमाय स्वाहांतकाय स्वाहा मृत्यवे स्वाहा ब्रह्मणे स्वाहा अग्नये स्विष्टकृते स्वाहेति एनदेव ग्रहोत्पातेषूलूक
श्येनो वा गृहं प्रविशेत्स्तंभो वा प्ररोहेद्वल्मीकं मधुजालं वा स्रवेदुदकुंभप्रज्वलने आसनशयनयानभंगे गृहकपोतिकाकृकलासशरीरसर्पणेच्छत्रध्वज
शेन्ये भूत्पातेषु भूकंपोल्कापातकाकसर्पसंगमप्रेक्षणादिष्वेनदेव ग्रहशांतिं चोक्तविधिना कृत्वा आचार्याय वरं दत्वा ब्राह्मणान् भोजयित्वा स्वस्तिं वाच
यीताशिषः प्रतिगृह्य शांतिर्भवतीति अत्र विकृतिं प्रसवेदित्यस्य यमलौ जनयेदित्यर्थः तथायं क्रमात् इदं च कुलनाशाद्यरिष्टनिवारणार्थत्वाच्छ्रे
तेन मारुतत्रयोदशकपालेन प्रत्यवायपरिहारार्थेन समुच्चीयते इति यमलजननशांतिः अथ सदंतजननशांतिः पाद्मे हेमाद्रौ विष्णुधर्मोत्त

च दंतजन्मनिबालानांलक्षणंतंनिबोधमे उपरिप्रथमंयस्यजायंतेचशिशोर्द्विजाः दंतेर्वासहयस्यस्याज्जन्मभार्गवसत्तम द्वितीयेचतृतीयेचचतुर्थे
पंचमेतथा यदादंताश्चजायंतेमासेचैवमहद्भयम् मातरंपितरंवाथूखादेदात्मानमेववा तत्रशांतिंप्रवक्ष्यामितांमेनिगदतःशृणु गजपृष्ठगतंबा
नौस्थंवास्थापयेद्विजः तदभावेतुसर्वज्ञकांचनेचवरासने सर्वौषधैःसर्वगंधैर्बीजैःपुष्पैःफलैस्तथा पंचगव्येनरत्नैश्चमृत्तिकाभिश्चभार्गव
नापयेदित्यन्वयः स्थालीपाकेनधातारंपूजयेत्तदनंतरम् चतुर्थ्यंतनाम्नासकृदाहुतिः सप्ताहंचात्रकर्तव्यंतथाब्राह्मणभोजनम् अष्टमे
णांतथादेयात्रदक्षिणा स्थालीपाकोत्रसप्ताहंकर्तव्यइतिकेचित् कांचनंराजतंगांचभुवंवाधान्यमेवच दद्यादितिशेषः इतिसदंतज
अद्भुतसागरेत्वत्रपंचदशीशांतिरुक्ता तत्रैवबृहस्पतिः बालानामष्टमेमासिषष्ठेमासिततःपुनः दंतायस्यचजायंतेमातावाम्रियते
ःपीड्यतेतत्रस्वयमेवनसंशयः दधिक्षौद्रघृताक्तानामश्वत्थसमिधांततः जुहुयादष्टशतंप्राज्ञःसमंत्रेणतुमंत्रवित् धेनुंचदक्षिण
संपद्यतेशुभम् यत्तुज्योतिर्निबंधे अष्टमादिषुमासेषुदंतोत्थानंशुभावहमित्युक्तंतद्गुणसंविज्ञानबहुव्रीहिणानवमादिपरम् इतिषष्ठा
दंतोत्पत्तिशांतिः साधारणेनप्रकारांतरमुक्तंपद्मपुराणे दंतजन्मनिसामान्येशृणुस्नानमतःपरम् सामान्येनिषिद्धे भद्रासनेनिवेश्ये
फलैस्तथा सर्वौषधैःसर्वबीजैःपंचगव्यैस्तथैवच स्नापयेत्पूजयेच्चाथवन्हिसोमसमीरणम् समीरणोवायुः पर्वतांश्चतथाख्यातान्देवदेवं
...प्रभोयथाविधि ब्राह्मणानांतुदातव्यायथाशक्त्याचदक्षिणा ततस्त्वलंकृतंबालमासनेतूपवेशयेत् पूज्याश्चाविधवानाय

...शांतिः शांतिसर्वस्वे कृतत्रयेकृताचेत्स्यात्तत्रयेवास्कृनोयदि मातापित्रोः कुलस्यापितदानिष्टंमहद्भवेत् ज्येष्ठ न...
...नि दुःखंवासुमहद्भवेत् जातस्यैकादशाहेवाद्वादशाहेशुभेदिने आचार्यमृत्विजोवृत्वाग्रहयज्ञपुरःसरम् ब्रह्मविष्णुमहेशेंद्रप्रतिमाःस्वर्णतः...
पूजयेद्धान्यराशिस्थकलशोपरिशक्तितः पंचमेकलशेरुद्रं पूजयेद्रुद्रसंख्यया रुद्रसूक्तानिचत्वारिशांतिसूक्तानिसर्वशः रुद्रसंख्ययारुद्रसू...
जपेदित्यर्थः आचार्योजुहुयात्तत्रसमिदाज्यतिलैश्चरुम् अष्टोत्तरसहस्रंवाशतंवाविंशतिंतुवा देवताभ्यश्चतुर्वक्त्रादिभ्योग्रहपुरःसरम् ...
...रिंद्रस्ययतइंद्रभयामहे ततःस्विष्टकृतंहुत्वाबलिंपूर्णाहुतिंततः अभिषेकंकुटुंबस्यकृत्वाचार्यंप्रपूजयेत् हिरण्यंधेनुरेकाचऋत्विजांदक्षि...
...ज्यस्यवीक्षणंकृत्वाशांतिपाठंतुकारयेत् इतित्रिकशांतिः अथसिंहादिप्रसूतगवादिशांतयः अद्भुतसागरेनारदः भानौसिंहगतेचैवयस्...
...ते मरणंतस्यनिर्दिष्टंषड्भिर्मासैर्नसंशयः प्रसूतांतत्क्षणादेवतांगांविप्रायदापयेत् ततोहोमंप्रकुर्वीतघृताक्तमधुसर्षपैः आहुतीनांघृ...
तंजुहुयात्ततः व्याहृतिभिर्होमः सोपवासःप्रयत्नेनदद्याद्विप्रायदक्षिणाम् वस्त्रयुग्मंचगांचैवसुवर्णंचप्रदापयेत् इष्टदैवतमंत्रेणततःशांतिप्र...
अथर्ववेदपरिशिष्टे माघेबुधेचमहिषीश्रावणेवडवादिवा सिंहेगावःप्रसूयंतेस्वामिनोमृत्युदायकाः विधानंतत्रकर्तव्यंनरेणहितमिच्छता सौरैः...
कर्तव्योहोमःसूर्यस्यतुष्टये प्रधानंतिलसर्पिश्चपायसंशर्करायुतम् सहस्रंहवनंप्रोक्तंदानान्यष्टौयथाविधि प्रत्यृचंपायसंहुत्वातांगांविप्रायदापयेत्
ततोष्टौदानानिदापयेत् तिलंलोहंहिरण्यंचकार्पासंलवणंतथा सप्तधान्यंक्षितिर्गावएकैकंपावनंस्मृतम् इतिसिंहादिप्रसूतगवादिशांतिः इति...

दिनकरभट्टकृतेशांतिसारेजननशांतयः अथबालपीडाशांतयः सारसंग्रहेक्रियाकालगुणोत्तरे ग्रहोधनवतीनामगृण्हतेजातिमात्रकम् क्रियाका
गुणोत्तरेतु प्रथमेहनिगृण्हातिबालकम्बालिनीग्रहीत्युक्तम् नारायणीयेतुपापिनीग्रहीतिपाठः ग्रीवायांपृष्ठभागेचललाटेश्रवणेमुखे उद्वेजयतिगात्र
आहारंचनगृण्हते मांजिष्ठाधातकीलोध्रहरितालंचचंदनम् एतैःप्रलेपयेद्बालंततोमुंचतिसाग्रही भोगंदद्यात्तुमातृणांसर्वकालंविचक्षणः गं
कृसरंसुरामांसंयथेच्छया भोगंबलिं सर्वकालंसंध्यात्रयेनिमित्तानंतरंचेति मदनरत्ने तत्रैवनारायणीये मत्स्यमांसस्कराभक्ष्यगंधस्रक्
लंहरेदित्यर्थः तत्रैवक्रियाकालोत्तरे लेपनंधातकीलोध्रमंजिष्ठातालचंदनैः धूपयेन्महिषाक्षेणततोमुंचतिसाग्रही बलिदानेविशेषरु
सारे कदंबश्चकरंजश्चबिभीतोनिंबएवच अश्वत्थोदुंबरौचैवश्लेष्मातकवटौतथा मातृवृक्षाःक्रमेणोक्ताःपूर्वादीशांतदिग्गताः
माश्रित्यबलिंदद्याद्यथोदितम् प्रतिस्थूलंप्रत्युदकंप्रतिवृक्षमथापिवा स्थूलमुच्चप्रदेशः बल्याशायामनूक्तायांप्राक्प्रोक्तानानुसा
रोचतेतत्रमातृणांबलिमाहरेत् कृत्वानीराजनांतंबलिमितिविधिवद्बालमाहूयतत्रसंस्पृश्याद्भिःसमंत्रंशिरसिसकुसुमैरक्षतैर्भ्रामयित्व
ग्रेदेवतायाविधवदुपहितैस्तत्रगीतैःस्वमंत्रैः कुर्याद्रक्षांसमीक्ष्यक्षणमिवविलयंयातिदुष्टग्रहार्तिः नीराजनमंत्रोनारायणीये ब्रह्माविष्णुश्चरु
वैश्रवणस्तथा रक्षंतुत्वरितंबालंमुंचमुंचकुमारकम् तत्रैवकालगुणोत्तरे पलाशाश्वत्थकापित्थबिल्वोदुंबरपल्लवाः पंचभंगःस्मृतोह्येषबालानां
बरोश्वत्थबिल्वन्यग्रोधपल्लवाः क्वथितेनकषायेणपरिषिंचेत्प्रशांतये परिषेचनमभिषेकः पूर्वोक्तबलिदानान्ते

मुमनस्तनपना... थणाये चंडोसकर्णाविनिलोत्रिनिष्ठोठांतिंसनासार्धशशीनचंडः हुंफट्शिरोंतोमनुरेषहन्याद्बालग्रहंक्रूमजपादिकर्म ॐ
दर्णरचहुंफट्स्वाहा सारसंग्रहेक्रियाकालगुणोत्तरे ग्रहीतुमाहिषीनामगृण्हतेतुद्विरात्रकम् कासश्वासातिमान्बालोगात्रंसंकोचतेतदा अपाम
शीरंचपिप्पलीबीजकंतथा अजाक्षीरेणसंपिष्यततोबालंप्रलेपयेत् गवांशृंगैश्चकेशैश्चनरैश्चधूपयेच्छिशुम् भोगंदद्याच्चमातृणांततोमुं
ही भोगोगंधादिःपूर्वोक्तः१ एवमग्रेपि घंटालीसाग्रहीनामगृण्हतेचत्रिरात्रकम् जृंभतेश्वसतेबालोरोदित्येवमुहुर्मुहुः नोन्मीलयतिगात्रा
मनगृह्णते गोदंतंगजदंतंचतथाचैकैकराजिनम् अजाक्षीरेणनिष्पिष्यततोबालंप्रलेपयेत् धूपयेन्निंबपत्रैश्चसितसर्षपसंयुतैः लेपितंधूपि
वतिसाग्रही२ काकोलीसाग्रहीनामगृण्हतेचचतुरात्रकम् फेनमुद्वमतेबालोदिशश्चैवनिरीक्षते उद्वेजयतिगात्राणिरोदित्येवमुहुर्मुहुः गज
सर्षपैःसमभागकैः गोमूत्रेणतुपिष्टानिततोबालंप्रलेपयेत् भोगंदद्याच्चमातृणांकुल्माषैःसममासवम् ४ हंसनीसाग्रहीनामगृण्ह
जृंभतेश्वसतेबालआकाशंचनिरीक्ष्यते मेषशृंगंवचांलोध्रंहारितालंमनःशिलम् अजामूत्रेणसंपिष्यततोबालंप्रलेपयेत् भोगंदद्याच्चमा
मुंचतिसाग्रही ५ फत्कारीसाग्रहीनामगृण्हतेषट्चरात्रिकम् हस्तौपादौचक्षिपतिहसतेचपुनःपुनः मुह्यतेरोदतेबालआहारंचनगृण्हते ग
ग्गुलंचराजसर्षपसंयुतम् पिष्ट्वाचघृतसंयुक्तंततोबालंप्रलेपयेत् भोगंदद्याच्चमातृणांध्रुवंमुंचतिबालकम् ६ मुक्तकेशीग्रहीनामगृण्हतेसप्तरात्र
मुंचत्येवधृतोनादंकाकवद्रुदतेसदा जायतेपूतिगंधश्चबालकोनात्रसंशयः कुष्टंत्वचावचाचैतच्छागमूत्रेणपेषयेत् एतैःप्रलेपयेद्बालंधूपोव्याघ्रनख

स्यच भोगंदद्यात्तुमातॄणांततोमुंचतिसाग्रही ७ गृण्हतेचाष्टरात्रंतुग्रहीनामत्रिदंडिका अतीवश्वसतेबालोगृह्यमाणस्तुरोदिति निरीक्षतेदिशश्चैव
जिह्वालालायतेसदा लेपनंतुवचाहिंगुलशुनैःसहसर्षपैः भोगंदद्याच्चमातॄणांततोमुंचतिसाग्रही ८ सातुमेषीग्रहीनामगृण्हतेनवरात्रकम् मुहु
श्वसतेबालऊर्ध्वंनिश्वसतेसदा रोदित्येवाप्यविश्रांतमुभौमुष्टीदशत्यपि चंदनंचवचाकुष्टंतगरंसितसर्षपाः उदकेनैवपिष्टानिततोबालंप्रलेपये
ंनरनखैःसार्द्धंतथावानररोमभिः मातॄणांभोगनैवेद्यैःशिशुंमुंचतिसाग्रही ९ रोदनीसाग्रहीनामगृण्हतेदशरात्रकम् नीलोत्पलसवर्णो
वतिवर्णतः दिवारोदितिरात्रौचगृध्रगंधश्चजायते रक्तंतुजायतेमूत्रंसुष्टुगंधसमन्वितम् कुष्ठंसर्जरसंचैववचासर्षपसंयुतम् उदके
ाबालंप्रलेपयेत् धूपयेन्निंबपत्रैश्चसमंमांस्याचलाक्षया भोगंदद्यात्तुमातॄणामासवंकोद्रवौदनम् दिनत्रयंबलिंदद्याद्दत्वाचैवप्रलेपये
षु पूतनाशिखिनीनामगृण्हतेमासजातकं तयागृहीतमात्रस्तुकाकारावंप्रमुंचति दिवारात्रौचश्वसतेगृध्रगंधश्चजायते सरक्तंस्त
र्योनैवपश्यति तेनसारमतेनित्यंकुमारीबलिकांक्षिणी पायसंत्रिविधंदद्यान्मांसंचैवचतुर्विधम् रक्तपुष्पंततोगंधंवस्त्रंदद्याच्चपीतकं स
सुरांचैवदिशमाश्रित्यदक्षिणां अधःकरंजवृक्षस्यमध्यान्हेबलिमाहरेत् पायसादियुक्तंबलिंदद्यादित्यर्थः धूपंगोदंतनखजंदद्याच्छृंगसम
ीपकंतिलतैलेनसप्तरात्रंबलिंहरेत् स्नापितंधूपितंबालंततोमुंचतिसाग्रही १ पूतनाकुलटानामगृण्हतेचद्विमासिकं तयागृहीतमात्रस्तुबालोस
[illegible]त्राणिस्विद्यंतेवापिनित्यशः ग्रीवाचपृष्ठतोवक्रामुखंचपरिशुष्यति क्षीरंपिबतिविस्रब्धंतत्क्षणादेवछर्दति तंदूलैःपंचवर्णै

[illegible] पुष्पगंधाश्चवस्त्राणिकृष्णान्येवप्रदापयेत् धूपयेन्निंबपत्रैश्चकुसुंभलशुनेनच दीपंहितिलतैलेनबलिंपूर्वेणदापयेत्
कृतेतुसादेवीबालंमुंचतितत्क्षणात् २ पूतनागौतमीनामगृण्हतेसात्रिमासिकं तयागृहीतमात्रस्तुबालोरोदितिभिश्चिनम् स्रवन्मूत्रंपुरीषं
द्रामोहयुतोभवेत् मधुगंधश्चभवतिगोगंधश्चक्वचित्क्वचित् ओदनंक्षीरशाकंचयवान्नंसोष्णमेवच सक्तवस्तिलचूर्णस्यपिंडिकाचैवद
धूपयेत्सर्षपैःश्वेतैःस्नापयेच्चविशेषतः स्नपनंपंचगव्येनतिलतैलेनदीपकम् पूर्वांतुदिशमाश्रित्यमध्यान्हेबलिमाहरेत् एतेनबलिदाने
साग्रही पूतनापिंगलानामचतुर्थेमासिगृण्हते तयागृहीतमात्रस्तुकंपतेदक्षिणेकरे क्षीरंपिबतिविश्रब्धंरावंमुंचतिदारुणं श्वेतव
र्णंचपरिशुष्यति पूतिगंधंभवेत्तस्यगात्रंचैवबालकस्यतु नमंत्रानोषधंतस्यबलिंतत्रनकारयेत् धात्रीतव्यंचनिस्नेहंयदिजीवतिमान
कुंचनीनामगृण्हतेपंचमासकम् तयागृहीतमात्रस्तुजायतेकांचनप्रभः सीदंतिसर्वगात्राणिमुखंचपरिशुष्यति क्षीरंपिबतिविस्न
मुहुर्मुहुः ओदनेपोलिकाशाकमत्स्यमांसानिकारयेत् पक्वान्नंपोलिकांचैवस्वस्तिकान्श्यामकांस्तथा दक्षिणांदिशमाश्रित्यमध्यान्हेब
रेत् एतेनबलिदानेनततोमुंचतिसाग्रही ५ पूतनापंकजानामषण्मासंगृण्हतेशिशुं तयागृहीतमात्रस्तुरोदित्येवमुहुर्मुहुः ज्वरश्चविविधं
स्यकुक्षिशूलश्चजायते मांसौदनंसुरामांसंबलिंविविधमेवच पुष्पैर्गंधैस्तथादीपैर्बलिंतस्याःप्रकल्पयेत् एवंबलिविधानेनततोमुंचतिसाग्रही ६
पूतनाशीतलानामगृण्हतेसप्तमासिकं आस्फोटयतिगात्राणितदाहारंनगृण्हते मांसौदनंसुराशाकंकुल्माषंचतिलास्तथा चक्रकाणिचपिष्टानि

कुस्कमंविविधंतथा एकरात्रंबलिंदद्यात्ततोमुंचतिसाग्रही ७ पूतनारजनीनामगृण्हतेचाष्टमासिकं तयागृहीतमात्रस्तु बालोमुह्यतितत्क्षणात्
स्फोटकाः सर्षपाकाराजायंतेतत्कलेवरे स्वनतेकंपतेचैवमुखंचपरिशुष्यति एवंहिलक्षणंज्ञात्वाबलिंतत्रनकारयेत् नमंत्रंनौषधंतस्य बालव
स्यसमाचरेत् जीवितेतस्यसंदेहो विनाशोनास्तिसंशयः ८ शिशुंमासेचनवमेगृण्हतेकुंभकर्णिका तयागृहीतमात्रस्तुतत्क्षणादेवछर्दति
धकृच्छ्रर्शरेच ज्वरोभवतिदारुणः क्षीरंपिबतिविस्रब्धंततोभवतिनिस्वनः कृसरंमत्स्यमांसंचक्षीरमोदनमेवच कुल्माषतिलचूर्णंचपुष्प
भिनम् पूर्वांदिशंसमाश्रित्यमध्यान्हेबलिमाहरेत् एवंकृतेतुविधिनाततोमुंचतिसाग्रही ९ पूतनापंकजानामगृण्हतेदशमासिकम् त
तुचक्षुर्भ्यांनैवपश्यति उद्वेजयतिगात्राणिआहारंचनरोचते ओदनंकृसरारक्तंमत्स्यमांसंसुरासवम् घंटांचैवपताकांचसक्तुपिष्टंचका
दिशमाश्रित्यमध्यान्हेबलिमाहरेत् १० गृण्हात्येकादशेमासिराक्षसीनामपूतना तयागृहीतमात्रस्तुदृग्भ्यांकिंचिन्नपश्यति नमंत्रो
नबलिःकार्यतेबुधैः तयागृहीतोजीवेच्चेत्ततोमेविस्मयोमहान् ११ पूतनाचपलानाममासेद्वादशकेभवेत् तयागृहीतमात्रस्तुरोदित्येवमु
ओदनंदधिकुल्माषंतिलचूर्णंतथैवच लाजाश्चापूपकाश्चैवसर्वंयत्नेनकारयेत् पूर्वांदिशमथाश्रित्यमध्यान्हेबलिमाहरेत् १२ अथवर्षेषु
तिवार्षिकंबालंपूतनापापकारिणी तयागृहीतमात्रस्तुधरण्यांपततेभुवम् नोन्मीलयतिगात्राणिरोदित्येवमुहुर्मुहुः दह्यंतेचैवगात्राणिआहा
...ांसंकुल्माषंपोलिकादधि तिलपिंडंचलाजाश्चगंधमाल्यंसुगंधवत् धूपयेच्चापिगोदंतैःकेशैश्चनखसंयुतैः स्नपनंपंचभंगे

...दशमथासाद्य एकरात्रंबलिंहरेत् एवंकृतेविधानेतुततोमुंचतिसाग्रही १ कुमारीरोदनीनामगृण्हतेचद्विवार्षिकम् तया
त्रस्तःज्वरेणपरिपीड्यते स्रवतेशोणितंविष्ठांमूत्रंरक्तंचजायते स्फुरतेदक्षिणोहस्तोरोदित्येवपुनःपुनः पद्मकेसरसंकाशंगात्रंतत्रप्रजायते ते
तेनित्यंकुमारीबलिकांक्षिणी गुडाक्तंकृसरंमांसंसिंदुवारंचपोलिकाम् कुल्माषंदधिसंयुक्तंतिलचूर्णंतथैवच पिष्टमूर्तिंबलिंकृत्वा पूर्वस्या
हरेत् धूपयेत्सर्षपैःश्वेतैर्दोषघ्नैर्बालकंततः पलाशाश्वत्थकापित्थबिल्वोदुंबरपल्लवाः पंचभंगःस्मृतस्त्वेषबालानांहितकारकः स्नापि
लंततोमुंचतिसाग्रही २ कुमारीधनदानामगृण्हतेचत्रिवार्षिकम् तयागृहीतमात्रस्तुचक्षुर्भ्यांनैवपश्यति सीदंतिसर्वगात्राणिज्वरःश्च
कंपतेवामहस्तश्चआहारश्चनरोचते ओदनंकृसरंमांसंमत्स्यानांचसुरासवम् कुल्माषंदधिमाषाश्चफलानिकुसुमानिच फलेनुमति
मंत्रप्रदापयेत् धूपंमयूरपिष्टैश्चमृगरोमनखैस्तथा स्नपनंपंचभंगेनरात्रौनैवबलिंहरेत् उत्तरांचदिशंगत्वाशुचिर्भूत्वासमाहितः
चीभूत्वाबलिकर्मसमारभेत् विधानमेतत्कृत्वातुततोमुंचतिसाग्रही ३ चतुर्वार्षिकबालंतुचपलानामगृण्हते तयागृहीतमात्रस्तुजरेण
सीदंतिसर्वगात्राणिश्वसतेकंपतेपुनः कारयेत्सर्पकृष्णेनगंधमाल्यबलिंतथा स्नपनंपंचभंगेनमेषशृंगेनधूपनम् यथासिद्धंबलिंकृत्वा पूर्व
शिदापयेत् बलिदानमिदंकृत्वाततोमुंचतिसाग्रही ४ कुमारीवर्तनीनामगृण्हतेपंचवार्षिकम् तयागृहीतमात्रस्तुअंधोभवतिबालकः सीदंत
गात्राणिमुखंचपरिशुष्यति मूत्रंप्रस्रवतेनित्यंत्रसत्येवमुहुर्मुहुः पायसंशर्कराक्षीरंतिलपिष्टंसुरासवम् पक्वापक्वानिमांसानिदधिमूलंफलंत

धूपयेल्लशुनैः केशैः सर्षपैश्चसमन्वितैः स्नपनंपंचभंगेनतिलतैलेनदीपकम् सप्तरात्रंबलिंदद्यात्ततोमुंचतिसाग्रही ५ कुमारीयमुनानामगृ[illegible]
तेषष्ठवार्षिकम् तयागृहीतमात्रस्तुरोदितिस्वरदारुणम् हसतेचदिवारात्रौआहारश्चनरोचते मत्स्यमांसंसुरामांसंपायसंकृसरंदधि पूप[illegible]
पालिकाश्चैवगंधमाल्यानुलेपनम् स्नपनंपंचभंगेनतिलतैलेनदीपकम् गवांशृंगेणधूपंचगोरोचननखैस्तथा चतुःपंचशफनिर्मूत्वा[illegible]
बलिंहरेत् एवंकृत्वाविधानेनबालंमुंचेन्नसंशयः ६ कुमारीजातवेदाश्चगृण्हतेसप्तवार्षिकम् तयागृहीतबालंतुरूपेणैवोपलक्षयेत्
[illegible]रात्रौआहारश्चनरोचते कृसरामत्स्यमांसानिपायसंघृतमिश्रितम् दधिक्षीरंमधुतथापूपकाश्चविशेषतः कुशैरास्तरणंकृत्वाति[illegible]
[illegible]येत् ॐ कूष्मांडीनिभगवतीराजिनीसज्जुत्हतबालकंमुंचरश्चोसर ॐसरदोषंहरदोषंहरस्वाहा सर्वग्रहाणांदुष्टानांहोतव्यंसवि[illegible]
[illegible]सर्षपधूपेनपंचरात्रंतुहोमयेत् ततोमुंचतिसाबालंसर्वदोषेभ्यएवच ७ कुमारीललितानामगृण्हतेचाष्टवर्षकम् तयागृहीतमात्रस्तु
[illegible]तिगर्जति आस्फोटयतिबाहुभ्यांत्रसतेचपुनःपुनः पायसंकृसराभ्यक्तंकुल्माषंस्वस्तिकांतथा रक्तंपूपान्मत्स्यमांसंदधिगंधांश्च[illegible]
दद्यात्तुवटवृक्षस्यमूलेगत्वास्वयंशुचिः धूपेचकुष्टमांसीस्यादेवंमुंचतिसाग्रही ८ अथदिनमासवर्षग्रहहराणि रावणः संभेदकूलद्वयमृ[illegible]
मूर्त्तिविधायेककरप्रमाणाम् त्रिलोचनांशूलकपालपाणिंजटाधरांरुद्रतनुंदधानाम् भुजंगभूषांभसितोज्ज्वलांगीमंगीकृताशेषललामल[illegible]
[illegible]रुद्रंसर्वग्रहाधिपम् स्कंदादिपूतनायुक्तंपूजयेच्चंदनादिभिः विरच्यतांदुलेश्चूर्णैश्चतुरस्त्रंकरद्वयम् तत्रसंस्था[illegible]

...रेत् तत्तन्मंत्रैर्विचित्रैश्चनानोपकरणादिभिः ततःसोपस्करांतांतुनिक्षिपेच्चचतुष्पथे कार्पासास्थिमयूरपिच्छबृ
त्यपिंडांतकत्वङ्मासी विषदंशाविट्तुषवचाकेशाहिनिर्मोककैः नागेंद्रद्विजहिंगुभृंगमरिचैस्तुल्यैश्चधूपःकृतःस्कंदोन्मादपिशाचराक्ष
वेशज्वरघ्नःस्मृतः मदनरत्नेकुमारतंत्रे द्वितीयेदिवसेमासेहायनेवासुनंदन गृण्हातिपूतनाबालंयोगिनीस्वस्तनापिवा ततो
र्वेः संकोचोहस्तपादयोः दंतान्खादित्यनिशंनिमीलयतिचक्षुषी आहारंचनगृण्हाति दिवारात्रंचरोदिति अक्षिरागच्छर्दनंच भ
पुनः कृशत्वंचप्रजायेत इत्येतच्छिशुलक्षणम् तंदुलप्रस्थपिष्टेन विनिर्मायाथपुत्तिकाम् त्रयोदशध्वजादीपाःस्वस्तिकाय
स्थप्रमाणपिष्टेनसिद्धापूपाश्चमत्स्यकाः मांसंचेत्येतदखिलंपश्चिमायांदिशिक्षिपेत् पश्चिमायांचसंध्यायामेतद्द्याद्दिनत्रय
नादियहगृहीतेपिप्रथमदिनादिगृहीतवत् धूपस्नानब्राह्मणभोजनादिकार्यमितिमदनरत्ने २ तृतीयदिवसेमासेवर्षेवापूतनाभिध
द्योगिनीबालंततःपूर्वंज्वरोभवेत् प्रस्थप्रमाणपिष्टेनपुत्तिकांकारयेत्तदा रक्तौदनंध्वजोरक्तःस्वस्तिकोरक्तएवच रक्तपुष्पंरक्तगंध
नुलेपनम् पश्चिमायांचसंध्यायामुदीच्यांनिक्षिपेद्बलिम् ३ चतुर्थेह्नि मासेतुवर्षेगृण्हातिबालकम् तुषमंडनिकानामपूतनावाथयोगि
षणाख्यातनस्तस्यजायतेप्रथमंज्वरः गात्रभंगोस्थिनिर्मूर्च्छोवैवर्ण्यंचाक्षिमीलनम् वैकथ्यंश्यामताश्वासःकंपोरुचिरितीरितम् तिलपि
यींकृत्वापुत्तिकांबिल्वकंटकैः अष्टांगैरर्चयेत्पुष्पयुक्तशंकुध्वजोर्जुनः स्वस्तिकोर्धप्रस्थसिद्धंपक्वंतावदपूपकाः त्रिसंध्यंपश्चिमाशायांबलिंद

प्रयत्नतः तावत् अर्धप्रस्थम् गोशृंगंसर्पनिर्मोकंलशुनंनिंबपत्रकम् मनुष्यकेशमार्जारलोमान्याजघृतंतथा एकैकश्च धूपयेदेकनिशिसंध्य
येपिच एकस्मिन्नेवदिनेबलिः ४ पंचमेदिवसेमासेवर्षेवापूतनाशिशुकम् विडालिकाख्यागृण्हीयात्प्रथमंजायतेज्वरः हिक्काश्वासश्च शूलश्च
त्रभंगोरुचिस्तथा तंडुलप्रस्थपिष्टेनविनिर्मायतुपुत्तिकाम् शुक्लोदनंध्वजाःपंचस्वस्तिकाःपंचचोज्ज्वलाः पंचदोषारशुक्लानिकुसुमानित्र
म् अपराण्हेवृक्षमूलेपश्चिमायांदिशिक्षिपेत् पंचमदिनात्प्रभृतिन्चतुर्थदिनाद्युक्तोधूपोपिकर्तव्यइतिमदनरत्ने ५ षष्ठेह्नितथामासे
पिबालकम् पूतनाशकुनीनामगृण्हीयात्तदनंतरम् ज्वरउद्वेजनंगात्रेशोषःश्वासोरुचिस्तथा कासश्चहस्तपादाक्षिसंकोचश्चेतिलक्ष
प्रस्थपिष्टेनविनिर्मायाथपुत्तिकाम् कृष्णौदनंध्वजाःपंचकृष्णाःस्वस्तिकपंचकम् कृष्णएवाथमत्स्यश्चपायसंदुग्धमेवच मांसंचाप
स्थपिष्टविनिर्मिताः अपराण्हेपश्चिमायांनिक्षिपेद्बलिपुत्तिकां पुत्रिकांपूर्ववत्कृत्वापललंमूनपाचितं मत्स्याःपर्पटिकाश्चैवरक्तंचप्र
उदीच्यांपूर्वसंध्यायांबलिर्देयःप्रशांतये अन्नबलिदानयोर्विकल्पः ६ सप्तमेदिवसेमासेवर्षेवाशुष्करेवती गृण्हातिपूतनाबालंततःस
रः गात्रभंगोथविद्वेषआहारेकंपरोदने प्रस्थसंमितपिष्टेनसम्यक्कृत्वाथपुत्रिकां सप्तध्वजाःसप्तद्वीपाःस्वस्तिकाःसप्तवैतथा पुष्पाणि
चभक्तंचेत्युदगाहरेत् ७ अष्टमेदिवसेमासेवर्षेवाक्रमतेशिशुम् बिडालिकानामधेयापूतनास्यततोज्वरः गात्रभेदोत्ररुदितंरोदनंनेत्रभे
[illegible] ट आहारद्वेषएवच तंडुलप्रस्थपिष्टेनपुत्तलींकारयेत्ततः पायसंमधुसर्पिश्चक्षीरलाजाश्चशष्कुलीः गुग्गुलंमेषमांस

दीपाश्चचत्वारो गंधानानाविधा अपि सुमनांसिचरक्तानीत्येव मन्त्रोदितोबलिः अमुंसप्ताहरेत्पूर्वसंध्यायांदक्षिणादिशि
स्यांवक्ष्यमाणमंत्रेणानेनसंयतः पूजापितत्रैव अष्टमीग्रहणमुपलक्षणम् नवमेदिवसेवर्षेहायनेवापिबालकं गृण्हातिमदनानाम्नी पू
तरम् ज्वरश्छर्दिर्घृणाध्मानंकासश्वासश्चतृष्णता गात्रभंगश्चशूलश्च चिन्हान्येतानिबालके प्रस्थमात्रेणपिष्टेनविनिर्मायचपुत्तिक
नंमत्स्यमांसंचपर्पटिंचेक्षुमूलकं निक्षिपेत्पूर्वसंध्यायामुत्तरस्यांबलिंदिशि मंत्रस्तु ॐ नमोभगवतेवासुदेवायहुंफट्स्वाहा ९
मासेहायनेवाथबालकं पूतनारेवतीनामगृण्हीयाद्बालकंततः जरश्छर्दिःश्वासकासौशूलंचेत्येतदीरितम् प्रस्थप्रमाणपिष्टेनपुत्ति
त् अष्टांगंलेपयेत्तत्रबिल्वपत्रस्यकंटकैः गुडौदनंचसर्पिश्चध्वजानांपंचविंशतिः स्वस्तिकानांप्रदीपानांपंचविंशतिरेवच चत्वारि
तद्दक्षिणदिग्गतं संध्यात्रयेवक्ष्यमाणमंत्रेणानेननिक्षिपेत् ॐ नमोभगवतेवासुदेवायहुंफट्स्वाहा १० एकादशदिनेमासेहायनेपू
गृण्हातिबालकंपश्चाज्ज्वरस्तस्यप्रजायते अन्नद्वेषोमुखेशोषोगात्रभंगश्चरोदनं ऊर्ध्वदृष्टिरपीत्येतल्लक्षणंतद्गृहाच्छिशोः पुत्तिका
रचितास्शुक्लमोदनं पुष्पाण्यपिचशुक्लानिध्वजानांपंचविंशतिः स्वस्तिकानांप्रदीपानांपंचविंशतिरेवच एतत्सर्वंयमाशायांसंध्यायांप्रातरु
ॐ नमोभगवतेवज्रहस्तायॐफट्स्वाहा ११ द्वादशेदिवसेमासेवर्षेवापूतनाशिशुं अद्भुतारव्याप्रगृण्हातिज्वरःस्यात्प्रथमंततः रोदनं
दादंतखादनंरक्तनेत्रता त्रयोदशस्वस्तिकाश्चध्वजादीपास्त्रयोदश अपूपामत्स्यमांसंचतथापर्पटिकाअपि एतत्सर्वंदक्षिणस्यांदिशिमंत्रेण

क्षिपेत् ॐ नमोनारायणायहनदुष्टसत्वानां फट्स्वाहा १२ अथत्रयोदशादिवर्षशांतिः मदनरत्नेप्रयोगसारे वर्षेत्रयोदशेबालंग्रहीगृण्हातिपक्षिप

तच्चेष्टाकिलहृच्छूलज्वररोदनहासनं शाल्योदनसुरामांसमत्स्यकुल्माषपायसैः दद्यात्सकृसरंप्रोक्तैर्मध्यान्हेत्रिदिनंबलिं पिबेच्चाभ्यंजयेत्सा

स्ततोमुंचतिसाग्रही १३ वर्षेचतुर्दशेबालंस्वच्छंदानामतोग्रही गृण्हातिचेष्टातत्रस्याच्छोणितस्रवणंतथा शूलंचनाभिदेशेस्यात्तत्रनास्ति

या १४ वर्षेपंचदशेबालंग्रहीगृण्हातिवारुणी तत्रेदंचेष्टितंविंद्याज्ज्वरोनिद्राविहस्तता कुल्माषकृसरापूपपोलिकापायसासवैः सपूगकै

त्रिरात्रंचापिधूपयेत् चंदनेनाज्यसंयुक्तंततोमुंचतिसाग्रही १५ षोडशेवत्सरेबालंग्रहीगृण्हातिदुर्जया तच्चेष्टाहासनंकोपोयास्या

हुः कुल्माषकृसरापूपतिलपिष्टान्नफल्गुकैः दध्नासहबलिंदद्यात्प्राच्यांदिशिदिनत्रयम् १६ वर्षेसप्तदशेबालंग्रहीगृण्हातिबालकी

विज्ञेयौनत्रनास्तिप्रतिक्रिया संवत्सरग्रहाह्येतेकुमारीपदपूर्वकाइति इतिबालपीडाशांतयः अथरोगोत्पत्तिशांतिर्वसिष्ठसंहिताय

प्रवक्ष्यामिरोगार्तानांशरीरिणां बलिपूजांगहोमैश्चजपब्राह्मणभोजनैः यस्मिन्धिष्ण्येयदानृणांरोगःसंजायतेतदा तद्धिष्ण्यपूजा

श्वरसुतुष्टये सुवर्णेनप्रमाणेनतदर्धार्धेनवापुनः धिष्ण्येशप्रतिमाकल्प्यायथावित्तानुसारतः ईशान्यामथवाप्राच्यामुदीच्यांदिशिस

दलोपर्यष्टदलंपद्मंगोमयमंडले पंचामृतैश्चसलिलैस्तत्तन्मंत्रैःपृथक्पृथक् स्नाप्यकल्पोक्तमंत्रेणप्रतिमांस्थापयेत्ततः कर्णिकायांतुसंस्थ

...तांग... ...चूर्णवस्त्रगंधाद्यैरुक्तधूपोपहारकैः आरक्तवर्णकुंभंचपंचभिःपल्लवैर्युतम् शुक्लवस्त्रस्वर्णरत्नशतौषधिसमन्वितं दे

समर्चयेत् तत्प्राच्यांस्थंडिलेवन्हिंविधिवत्स्थापयेत्ततः मुखांतेजुहुयादुक्तद्रव्येणाष्टसहस्रकम् उक्तद्रव्येणतत्तन्नक्षत्र
स्यमाणेन तिलहोमंव्याहृतिभिरष्टोत्तरसहस्रकम् पूर्णाहुतिंचजुहुयात्सम्यक्कृजपतिपूर्वकम् ततःशुद्धोपविष्टस्यरोगिणःप्राङ्मुखस्यच
कुंभजलैरब्लिंगैर्वारिमंत्रकैः मार्जनंकारयेत्तस्यसम्यक्संकल्पपूर्वकम् नीराजनंविशुद्धात्मा पूजास्थानंसमागतः देवंहुताशनंभक्त्या
र्थयेदिति अमृतोद्भवधिष्ण्येशयज्ञस्त्वंशंकरात्मकः रोगादस्माच्चमांरक्षत्वंवश्याश्चधिष्ण्यपाः इतिप्रार्थ्यततोदद्यात्प्रतिमांवस्त्रसंयुत
सहितांगांच आचार्यायकुटुंबिने ब्राह्मणेचयथाशक्त्याब्राह्मणान्भोजयेत्ततः कृत्वानक्षत्रपूजांचतिथिवासरयोरपि सर्वान्कामान
रोगात्प्रमुच्यते अत्रजपः आपस्तंबशाखीयानामष्टौवाक्यानाम् एतद्विधियुतांवक्ष्यमाणांनक्षत्रशांतिंकृत्वातिथिशांतिंवारशांति
भिः अश्विन्यामुत्थितोव्याधिर्नवरात्रेणमुंचति देवस्यत्वेतिमंत्रस्यगायत्रीकाश्यपोश्विनो श्वेतवर्णौसुधापूर्णौकुंभांभोजधरौपृथ
पलपुष्पाज्यंगुग्गुलूचगुडप्रियौ क्षीरलड्डुकभोक्तारौसमिधःक्षीरवृक्षजाः आज्यंगुग्गुलुश्चधूपइत्यर्थः गुडःक्षीरलड्डुकंचनैवेद्यम् स
मद्रव्यमित्यर्थः एवमग्रेपिद्रष्टव्यम् गुडौदनबलिंदद्याद्दीपैःसार्द्धनिशामुखे १ भरण्यामुत्थितोव्याधिरचिरान्निधनप्रदः मासेनमुंचत्यथ
वस्यकुटिलागतिः त्र्यंबकस्यतुमंत्रस्यचोक्ताश्छंदर्षिदेवताः गंधोगरूः करवीरपुष्पंधूपश्चगुग्गुलः आज्यदीपंचसर्वेषांनैवेद्यंचगुडौदनम् पा
दंडधरोरक्तस्त्वाज्यमध्वाक्षतैर्हविः महिषीनायकारूढःकृसरान्नबलिंहरेत् वक्ष्यमाणेनमंत्रेणबलिंसम्यक्प्रदापयेत् २ कृत्तिकासूत्थितोव्याधि

शरात्रेणमुंचति स्त्रुक्स्रुवाभयवरदः सुवर्चोमेषवाहनः मेधातिथिर्जगत्यग्निः पुनंतु मामित्यस्यच चंदनंयूथिकापुष्पंघृतधूपः सगुग्गुलुः नैवेद्यंतिलम्
षान्नंवटकाद्येनसंयुतम् गुडौदनंहविस्तत्रपायसेनबलिंहरेत् ३ रोहिण्यामुत्थितोव्याधिर्दशरात्रेणमुंचति नमोब्रह्मणमंत्रस्यगायत्रीविधिरीश्वरः
ष्कः कमंडलुस्त्वक्षसूत्राभयवरप्रदः चंदनंकमलंपुष्पंसदशांगंचगुग्गुलम् नैवेद्यंपायसंसाज्यंसर्वदान्नैर्हविर्भवेत् दधिक्षीरघृतक्षौद्रशाल्यन्नेनबलिं
म् ४ चंद्रभेनोत्थितोव्याधिः पंचरात्रेणमुंचति गदावरदपाणिश्चश्वेतोसौरथवाहनः नवोनवोभवत्यस्यगायत्रीगोतमःशशी चंदनंकुमुदंपुष्पंदश
ौदनम् नैवेद्यंमंडकापूपघृतक्षौद्रसमन्वितम् शर्करादधिमिश्रेणशक्लान्नेनबलिंहरेत् ५ आर्द्रायामुत्थितोव्याधिरचिरान्निधनप्रदः मा
थवादेवस्यकुटिलागतिः शुद्धस्फटिकसंकाशः शूलखड्गभयेष्टदः नमः शंकरायेत्यस्यबृहतीशोविधिर्ऋषिः चंदनंसौभरंपुष्पंदशां
म् समधुवाज्यंहविस्तत्रदध्योदनबलिंहरेत् ६ पुनर्वसौभवेद्व्याधिर्नवरात्रेणमुंचति कमंडल्वक्षसूत्रेध्मदर्भस्त्रुक्स्रुवभृत्सदा अदि
स्यत्रिष्टुपोद्रुहिणोदितिः हरिद्राकुंकुमंगंधः पुष्पंसेवंतिकादयः धूपोमलयजंपिष्टंघृतान्नंपीतवर्णकम् घृताक्तंतंदुलहविः पीतान्नेनब
ष्येसमुत्थितोव्याधिः सप्तरात्रेणमुंचति पीतोदंडकमंडल्वक्षसूत्राभयोद्यतः बृहस्पतेअतीत्यस्यत्रिष्टुप्जीवांगिराऋषिः कुंकुमंवारिजंपुष्पंनैव
मम् मंडकागुडसंयुक्तमेतदेवहविर्भवेत् समंडकघृतान्नेनबलिंतत्रप्रदापयेत् ८ आश्लेषासूत्थितोव्याधिः क्लेशान्मासेनमुंचति नमोअस्त्विनिमंत्र
[illegible] र्वोभोगयुक्तः खड्गचर्मधरः शुभः सकुंकुमागरुर्गंधः पुष्पंचागस्तिसंभवम् घृतंगुग्गुलधूपोत्रनैवेद्यंक्षीरसर्पिषा हविः स

[illegible] हरेत् ९ पितृभेचोत्थितोव्याधिरत्रिरान्निधनप्रदः अथवासार्द्धमासेन धूम्रोदंडपवित्रधृक् आयंतुनस्त्विनिचास्यजगतीपितः
चंदनचंपकपुष्पधूपःसघृतगुग्गुलुः नैवेद्यंघृतपिष्टान्नंतिलान्नंसघृतंहविः सतिलाज्यंचमुद्गान्नंबलिंचपितृतृप्तये १० पूर्वाफल्गुनभेव्याधिरर्द्ध
चति भगएवभगवानित्यस्यत्रिष्टुब्यागोविधिः पद्माभयकरःपद्मवर्णःसिंहासनेस्थितः चंदनंमालतीपुष्पंबिल्वधूपोघृतोदनम् नैवेद्यंशर्क
द्यैश्चसंयुतम् घृतोदनंहविस्तत्रपायसेनबलिंहरेत् ११ अर्यमर्क्षेभवेद्व्याधिरर्धमासेनमुंचति पद्मवर्णःपद्मसंस्थःपद्मगर्भसमद्युतिः अर्यमाय
र्यमात्रिष्टुबब्जजः कर्पूरःकुंकुमंगंधःपुष्पंबंधूकसंज्ञकम् घृतगुग्गुलधूपोत्रनैवेद्यंघृतपायसम् होमद्रव्यंघृतान्नंस्याच्छाल्यन्नेनबलिंहरेत् १२
व्याधिर्नवरात्रेणमुंचति उदुत्यमितिहिरण्यस्तूपोगायत्र्यदितिर्यजेत् रक्तगंधंकुंकुमंचपुष्पंराजीवसंज्ञकम् गंधगुग्गुलधूपोत्रनैवेद्यंघृत
पुष्पंतिलाज्यान्नंदूर्वाभिःसहितंहविः गुडशर्करमध्वाज्यपिष्टान्नेनबलिंहरेत् १३ चित्रायामुत्थितोव्याधिर्दशरात्रेणमुंचति चित्रंदेवानामित्य
पितामहः अक्षसूत्राभयकरश्चित्रवर्णःशिवेतरः सकुंकुमागरुर्गंधःकुसुमंचित्रवर्णकम् नैवेद्यंमोदकाज्यान्नंचित्रान्नंसघृतंहविः तदन्नेन
सर्वरोगापनुत्तये १४ स्वात्यर्क्षेचोत्थितोव्याधिःसर्वदानिधनप्रदः एकद्वित्रिचतुष्पंचषण्मासैर्वापिमुंचति सनःपितेतिमंत्रस्यगायत्रीमरुदंगिराः रव
मेधरःकृष्णोगंधःकृष्णागरुर्भृशम् पुष्पंदमनकंधूपंचंदनागरुगुग्गुलुः नैवेद्यंपायसंसाज्यंहविस्तेनबलिंहरेत् १५ द्विदेवभेभवेद्व्याधिर्मासेनैकेनमुंचति
द्राग्नीआगतमितिगायत्रीवास्यचैवहि मधुच्छंदाऋषींद्राग्नीतयोर्ध्यानंचपूर्ववत् श्रीखंडकुंकुमंगंधंतयोःपुष्पंसरोरुहम् देवदारुस्तयोर्धूपोनैवेद्यंघृतपाय

सम् तदेवान्नंहविस्तत्रचित्रान्नेनबलिंहरेत् १६ मित्रभेचोत्थितोव्याधिर्दशरात्रेणमुंचति मित्रस्यचर्षणीऽिति गायत्रीचास्यवैवहि ऋषिर्हिरण्यस्तूपाख्यस्तत्रमित्र

धिदेवता द्विभुजःपद्मगर्भाभःपद्मभृत्पद्मसंस्थितः कुंकुमंपुंडरीकाख्यंपुष्पंधूपंचचंदनम् नैवेद्यंपायसंसाज्यंहविःकंदंचसूरणम् बलिस्तत्रप्रदानव्योम

शर्करपायसम् घृतपूरकमाषान्नंमुद्गगर्भैश्चसंयुतम् १७ ज्येष्ठायामुत्थितोव्याधिर्मृत्युरेवनसंशयः अथवामासमेकंवामुंचत्येवनसंशयः इंद्रंवइतिमं

यगायत्रीद्रोंगिराऋषिः इंद्रस्तुपूर्ववद्गंधंचंदनकुसुमंशुभम् कर्पूरधूपोनैवेद्यंचित्रान्नंसुमनोहरम् हविस्तुसूरणंकंदंमधुकंदंसुपायसम् विचित्र

नदध्यन्नेनबलिंहरेत् १८ मूलभेचोत्थितोव्याधिमासार्धेनविमुंचति खड्गचर्मधरःकृष्णःकरालवदनःप्रभुः मोषुणस्यचगायत्रीघोरःकण्वोऋ

धःकृष्णागरुःपुष्पंपद्मनीलोत्पलंशुभं धूपःकृष्णागरुर्माषमिश्रान्नमुपहारकम् तदेवान्नंहविस्तत्रमाषान्नेनबलिंहरेत् १९ वारिभेचोत्थिते

णोनिधनप्रदः विमुंचत्यथवामासैर्द्वित्रिषड्भिश्चसप्तभिः आप्यायस्वेतिमंत्रस्यगायत्रीपद्मपोजलं सुवर्णोद्विभुजःपद्मपाणिर्गंधश्चचंदनं पु

त्रनैवेद्यंघृतपायसं हविर्मसूरपिष्टान्नंतदन्नेनबलिंहरेत् २० विश्वभेचोत्थितोव्याधिःसार्धमासेनमुंचति विश्वेदेवासइत्यस्यगायत्रीविश्वदेव

भयांभोजवरदश्चकुशासनः चंदनंकमंडलुपुष्पंधूपःसघृतगुग्गुलुः नैवेद्यंपायसाज्यान्नंहविरप्येतदेवहि समिद्भिर्नितुलैःसार्द्धंतदन्नेनबलिंह

भेचोत्थितोव्याधिर्दशरात्रेणमुंचति अतोदेवेतिमंत्रस्यगायत्रीपद्मजोहरिः पीतांबरःकृष्णवर्णःशंखचक्रगदाब्जजः चंदनंमालतीपुष्पंधूपःका

भोज्यादिभिःसह नैवेद्यंहविरप्येतत्पायसेनबलिंहरेत् २२ वसुभेचोत्थितोव्याधिर्दशरात्रेणमुंचति त्रायंतामिहम

डु [illegible]सुरुत्ततः चापबाणधरः शुक्लोगंधः कर्पूरश्चंदनं वारिजं गुग्गुलुर्धूपो नैवेद्यं घृतपायसं हविश्चौदुंबरसमिद्गुडपायससंयुतं लड्डुकापूप
तिलपिष्टबलिं हरेत् २३ वारुणे चोत्थितो व्याधिरष्टरात्रेण मुंचति इमंमेवरुण इत्यस्य गायत्री कण्ववारिपः नागपाशधरः श्रीमान्नवरत्न विभू
रस्थो गुरुर्गंधः पुष्पंचकमलोत्पलं कर्पूरं चंदनं धूपो नैवेद्यं घृतपोलिका हविरश्वत्थसमिधश्चित्रान्नेन बलिं हरेत् २४ अजेकपाद्गवो व्याधिः सर्व
अथवा बहुभिर्मासैर्दिवसैर्वा विमुंचति वामपादकरं भूम्यामाकाशे तत्परद्वयं प्रसार्य प्रांजलिः साक्षादीश्वरं चिंतयन्स्थितः शमग्निरित्य
श्चीचतुराननः कुंकुमं चंदनं गंधं पुष्पं श्वेतार्कसंभवम् धूपः शतौषधीमिश्रो नैवेद्यं दधिपायसं हविः कूष्मांडखंडः स्याद्दध्यन्नेन बलिं हरेत् २५
नवेह्याधिः सार्धमासेन मुंचति नमस्ते रुद्र इत्यस्य सर्वं तत्रैव संस्थितं गंधं चंदनकर्पूरैः पुष्पं पद्मोत्पलं शुभं सबिल्वगुग्गुलुर्धूपो नैवेद्यं घृत
माषतिलान्नाज्ययवव्रीहिभिर्वं हविः २६ रेवत्यामुत्थितो व्याधिरष्टरात्रेण मुंचति हंसः शुचिषदित्यस्य जगती वामदेवकः पूषा च देवता भोज
जधरः शुभः रक्तचंदनगंधोत्र पुष्पं मंदारसंज्ञकम् धूपस्तु गुग्गुलुः साज्यं नैवेद्यं घृतपायसम् हविस्तदेव सजलं दध्यन्नेन बलिं हरेत् भूतेशानुस्मृ
स्मात्द्रोगनाथो महाज्वरः रोगादस्माच्च मां त्राहि त्वं गृहीत्वोत्तमं बलिं २७ इति नक्षत्रपीडाशांतयः अथ बोधायनोक्तज्वराद्युत्पत्तौ शांतयः प्रतिप
कष्टसंदेहो दिनानि दश अग्निर्देवता अग्निरस्मीति पूजामंत्रः हैमी प्रतिमा घृतधूपो घृतदीपश्च यथासंभवं नैवेद्यं घृतं होमद्रव्यं शांतिर्भवति अत्र सर्वत्र
थमं तत्तद्देवतामंत्रजपः सहस्रादिसंख्याकः पश्चात्पूजाहोमदानादिसंख्या चाष्टोत्तरशतादिर्व्याधितारतम्येन कल्प्या सहस्रमृत्युर्निर्देशः १ द्वितीयायां

नानिषोडशब्रह्मादेवता ब्रह्मजज्ञानमितिजपपूजाहोममंत्रः अगरुर्धूपः घृतदीपः सर्वत्रशर्करानैवेद्यंतिलयवाज्यानिहोमद्रव्याणिप्रतिमाहैमी २ तृतीय
दिनानिनवपार्वतीदेवतागौरीर्मिमायेतिमंत्रः दूर्वाभिःपूजाकुंकुमगंधःगुग्गुलुः सर्वधूपोघृतदीपः द्राक्षाक्षीराज्यनैवेद्यंपायसंत्रिमधुरान्तंदूर्वाश्चप्रतिमाहै
३ चतुर्थ्यांदिनानिषोडशगणपतिर्देवतागणानांत्वेतिपूजाहोमादिमंत्रः हैमीप्रतिमाकुंकुमंरक्तचंदनंगंधः करवीरादीनिपुष्पाणि अगरुधूपोलड्डुकेक्षुरसं
निनैवेद्यंनारीकेलशकलानिकर्दलीफलानिचहोमद्रव्यम् ४ पंचम्यांदिनान्येकविंशतिर्नागोदेवताहैमीप्रतिमानमो अस्तुसर्पेभ्यइतिमंत्रः चंदनं गंध
पुष्पाणि घृतधूपः पयोनैवेद्यंतिलयवाज्यपायसशर्करामधूनियथाहोमद्रव्यम् ५ षष्ठ्यांदिनानिद्वादशस्कंदोदेवताद्रप्सश्चस्कंदेतिपूजामंत्रःपी
कंवागंधः रक्तानिपुष्पाणिजातीपुष्पाणिवाजटामांसीधूपः लड्डुकादिनैवेद्यंफलानिवा तिलयवाज्यशर्करामधूनियथाहोम द्रव्यंहैमीप्रतिमाश
सप्तम्यांदिनान्यष्टौदिननाथोदेवता आसत्येन आकृष्णेनेति धामंत्रः हैमीताम्रजावाप्रतिमाकुंकुमंगंधः करवीरादीनिपुष्पाणिगुग्गुलुधू
संयुक्तंपायसंनानाफलनैवेद्यं अर्कसमिधःपायसंहोमद्रव्यम् ७ अष्टम्यांदिनानित्रयोदशईश्वरोदेवता तमीशानमितिपूजामंत्रः राजतीप्र
श्चंचंदनंगंधः बिल्वदलान्यर्कपुष्पाणिनीलोत्पलानिचपुष्पाणिजटामांसीधूपः पायसंनानाभक्षाश्चनैवेद्यंत्रिमध्वक्तास्तिलाहोमद्रव्यंरोगशांति
वम्यांदिनान्यष्टादश भगवतीदुर्गादेवताजातवेदसइतिपूजामंत्रः हैमीप्रतिमारक्तचंदनगंधः कुंकुमादिकंवानैवेद्यंहोमद्रव्यंओदनम् ९ दश
म्यांविंशतिः यमोदेवताहैमीलोहीवाप्रतिमायमायत्वेति पूजामंत्रः चंदनंमृगमदश्चगंधः मधुसर्जरसश्चधूपःतिलतैलदीपः बिल्वपत्राणिकृष्णतिलाश्च

...नैवेद्यं घृतंमधुतिलमुद्गाहोमद्रव्यम् १० एकादश्यांदिनानिसप्तविश्वेदेवादेवताविश्वेदेवासइतिमंत्रः हैमीप्रतिमाश्वेतचंदनगंधः कृष्णागरु
दीपः तुलसीपत्राणिपूजायांयवमोदकंनैवेद्यंतिलयवमध्वाज्यंहोमद्रव्यम् ११ द्वादश्यांद्वादशदिनानिरुद्रोदेवतायातेरुद्रेतिमंत्रः हैमीप्रतिमाचंद
गरुर्धूपः घृतदीपः पायसंनैवेद्यंचंपकपुष्पंकमलंच पूजायांतिलयवाज्यमधूनिहोमद्रव्यंशांतिर्भवति १२ त्रयोदश्यांदिनान्यष्टौशमीदेवतारौ
मूर्तिः आप्यायस्वेतिमंत्रः पूजादौश्वेतचंदनगंधः चंदनधूपः घृतदीपः दधिशर्करानैवेद्यंतिलयवास्त्रिमध्वक्ताहोमद्रव्यंशांतिर्भवति १३ चत
द्वाविंशतिः नमः शंभवेचेतिमंत्रः रौक्मीराजतीवामूर्तिः श्वेतचंदनगंधः अर्कपुष्पंबिल्वदलानिवापूजायांअगरुर्धूपः पायसंनैवेद्यंत्रिमध्वक्ता
यम् १४ अमायांदिनान्यष्टादशशचीदेवताहोतायक्षदितिमंत्रः हैमीप्रतिमाकुंकुमादिगंधः नानासुगंधपुष्पाणिकृष्णागरुर्धूपः फेणिकापू
पायसंहोमद्रव्यं १५ पूर्णिमायांदिनानिषोडशचंद्रोदेवतादमनकपूजायामन्यत्सर्वंत्रयोदशीशांतावुक्तंग्राह्यम् १६ इतिदिनकरभट्टकृतेशा
थिदोषशांतिः अथाश्वलायनोक्तवारशांतिः आदित्यवासरस्यरुद्रोदेवता यातेरुद्रेतिमंत्रः हैमीराजतीवामूर्तिः चंदनगंधः आगरुर्धूपः घृतदीपः पा
नैवेद्यंहोमद्रव्यंच १ सोमवासरस्यपार्वतीदेवता गौरीर्मिमायेतिमंत्रः हैमीराजतीवाप्रतिमाकुंकुमगंधः सुगंधिपुष्पं अगरुर्धूपः घृतदीपः नानाभक्ष्या
नैवेद्यंतिलयवाहोमद्रव्यंदेवभक्तसंतर्पणंच २ भौमस्यस्कंदोदेवता अन्यत्सर्वंषष्ठीशांतिवत् ३ बुधवासरस्यविष्णुर्देवता विष्णोरराटमसीतिमंत्रः
मंस्वरूपंपीतचंदनंपीतपुष्पाणिकमलानिच अगरुर्धूपः घृतदीपः यवलड्डुकनैवेद्यंतिलयवाज्यहोमः ४ गुरुवासरस्यब्रह्मादेवताब्रह्मजज्ञानमितिमं

हैमीप्रतिमाकुंकुमगंधः पर्णपुष्पंगुग्गुलुर्धूपः शर्कराज्यंनैवेद्यं तिलयवधानाघृतंहोमद्रव्यम् ५ शुक्रवासरस्यइंद्रोदेवतात्रातारमिंद्रमितिमंत्रः हैमी
र्तिः चंदनंगंधः चंपकंपुष्पं अगरुर्धूपः घृतपक्वंनैवेद्यंतिलयवाज्यमधूनिहोमद्रव्यम् ६ शनिवासरस्ययमोदेवतायमेनदत्तमितिमंत्रः हैमीलोहीवाप्रति
ताम्रजेतिकेचित् चंदनंगंधः पुष्पंकृष्णंमधुधूपः तिलतैलेनदीपः मधुमत्स्याश्वनैवेद्यंतिलामधुचहोमद्रव्यंशांतिर्भवति ७ इतिवारशांतिः प्रतिपद्युत्थि
व्याधिर्द्वादशाहेनमुंचति अग्निस्तुदेवतातत्रकृसरान्नबलिंहरेत् १ द्वितीयायांभवेद्व्याधिः पंचरात्रेणमुंचति ब्रह्मातुदेवतातत्रपायसेनबलिंहरेत् २ तृती
यांभवेद्व्याधिः सप्तरात्रेणमुंचति कामस्तुदेवतातत्रघृतान्नेनबलिंहरेत् ३ चतुर्थ्यामुत्थितोव्याधिर्दशरात्रेणमुंचति चंद्रस्तुदेवतातत्रमोदकान्
[illegible] ४ पंचम्यामुत्थितोव्याधिर्नवरात्रेणमुंचति नागस्तुदेवतातत्रदुग्धान्नेनबलिंहरेत् ५ षष्ठ्यांसमुत्थितो[illegible]धिश्चतूरात्रेणमुंचति स्कंदस्तु
[illegible]न्नेनबलिंहरेत् ६ सप्तम्यामुत्थितोव्याधिरष्टरात्रेणमुंचति अर्यमादेवतातत्रगुडान्नेनबलिंहरेत् ७ अष्टम्यामुत्थितोव्याधिर्दशरात्रेणमुंचति
वतात्रपायसान्नंबलिंहरेत् ८ नवम्यामुत्थितोव्याधिर्मरणंनिश्चितंभवेत् यमस्तुदेवतातत्रमाषान्नेनबलिंहरेत् ९ दशम्यामुत्थितोव्याधिः पं[illegible]
सवितादेवतातत्रघृतान्नेनबलिंहरेत् १० एकादश्युत्थितोव्याधिस्त्रिरात्रेणचमुंचति महाविष्णुर्देवतात्रपूपान्नेनबलिंहरेत् ११ द्वादश्यामु[illegible]
र्मरणंनिश्चितंभवेत् रोगिणोनविनिर्मुक्तिर्यमलोकंसगच्छति १२ त्रयोदश्युत्थितोव्याधिः सप्तरात्रेणमुंचति वरुणोदेवतातत्रलड्डुकान्नबलिं[illegible]
[illegible]र्दश्यांभवेद्व्याधिर्मृत्युदोवाद्विमासकः मुंचंतिदेवताः सर्वाःपिष्टान्नेनबलिंहरेत् १४ पूर्णिमायांभवेद्व्याधिस्त्रिरात्रेणप्रमुंचति चंद्रस्तुदे[illegible]

...वाऽन्नबलिंहरेत् १५ अमावास्यांभवेद्व्याधिर्मासेनैकेनमुंचति अथवाष्टाचत्वारिंशद्दिनानिदाहपीडितः ३० महामृत्युर्भवेत्तेनयमलोकंसगच्छ...
शांतिंप्रवक्ष्यामिसर्वदोषोपशांतये पितॄणांप्रतिमाकार्यासौवर्णीकर्षसंमिता येचेहपितरइतिपूजामंत्रउदीरतः कृष्णागरुश्चंदनंचकृष्णपुष्पैश्च...
समिदाज्यतिलैर्माषचर्वाज्येनचहोमयेत् अष्टोत्तरशतंवापिअष्टाविंशतिरेववा कृष्णागौश्चप्रदातव्याआचार्यायसदक्षिणा ब्राह्मणान्भोज...
शस्वशक्तितः सर्वारिष्टप्रशांत्यर्थंदीर्घायुश्चसुखीभवेत् रविवारेभवेद्व्याधिर्ज्वरदाहेनपीडितः सवितादेवतातत्रपायसान्नबलिंहरेत् १ ...
...धिःसप्तरात्रेणमुंचति सोमस्तुदेवतातत्रघृतान्नेनबलिंहरेत् २ भौमवारेभवेद्व्याधिःक्लेशायमरणायच कुजस्तुदेवतातत्ररक्तान्नेनबलिंह...
भवेद्व्याधिःक्लेशायमरणायच बुधस्तुदेवतातत्रमुद्गान्नेनबलिंहरेत् ४ गुरुवारेभवेद्व्याधिःपंचरात्रेणमुंचति गुरुस्तुदेवतातत्रहरिद्रान्न...
भृगुवारेभवेद्व्याधिःसप्तरात्रेणमुंचति भृगुश्चदेवतातत्रहरिद्रान्नब० ६ शनिवारेभवेद्व्याधिर्मासार्द्धेनविमुंचति शनिस्तुदेवतातत्रमाषान्नेनब...
श्यादिषड्वर्गोद्बलिंदद्यात्तदीश्वरे योबलिंकुरुतेसम्यक्रोगीरोगात्प्रमुच्यते आधाननिधनप्रत्यक्जन्माख्याविपत्करे नक्षत्रेजनितेव्याधौक्लेशायम...
यच आश्लेषार्द्रात्रिपूर्वायमवरुणमरुच्छक्रतारानलाःस्युर्द्वादश्यांस्कंधरिक्तातिथिषुचरविजारार्कवारेषुयेषाम् रोगःसंजायतेतेयमपुरमचिरात्प्रा...
वंत्येवचंद्रेजन्मन्यष्टारव्यबंधुव्ययप्रभवनगतेमृत्युलग्नेचराशौ इतिदिनकरभट्टकृतेशांतिसारेव्याधिनक्षत्रादिशांतयः अथज्वरशांतयः मदनरत्ने अ...
त्रेयप्रोक्तनक्षत्रपरिधूने अश्विन्यांज्वरोत्पत्तिश्चेद्दशदिनानिपीडा नीलोत्पलपुष्पैःपूजा गुग्गुलुर्धूपः क्षीरलड्डुकंनैवेद्यं देवस्यत्वेतिपूजामंत्रः क्षीरवृक्षस...

स्प्रधानद्रव्यम् गायत्र्याष्टशतंहुत्वादध्योदनबलिंहरेत् एकादशदिनादारभ्य पंचविंशतिदिनांतेसुखीस्यात् १ भरण्यांज्वरोत्पत्तिश्चेन्मृत्युःसंदेहोवा गुड
पूपंनैवेद्यं कृष्णसुरभिपुष्पं महिषाक्षोधूपः त्र्यंबकमितिपूजामंत्रः घृतमधुतिलाहोमद्रव्यं गायत्र्याष्टोत्तरशतंयमायहुत्वा एकविंशतिदिनांतेसुखीस
त् २ कृत्तिकायांज्वरश्चेन्नवदिनानिपीडा घृतौदननैवेद्यम् यूथिकापुष्पपूजा सर्पिर्धूपः पुनंतुमांदेवजनाइति पूजामंत्रः सावित्र्याष्टोत्तरशतंदध्योदनं
त्वाहुतशेषेणबलिंहरेत् पंचदिनादारभ्यएकविंशतिदिनांतेसुखीस्यात् ३ रोहिण्यांज्वरश्चेन्नवदशत्रीणिदिनानिपीडा क्षीरान्ननैवेद्यं कमलपुष्पपू
र्रसोधूपः नमोब्रह्मणइतिपूजामंत्रः घृतंसर्वधान्यानिचहोमद्रव्यं सावित्र्याष्टोत्तरशतंहुत्वाक्षीरान्नेनप्रजापतयेबलिंदद्यात् त्रिदिनादारभ्यनव
वीस्यात् ४ मृगशिरसिज्वरश्चेत्पंचदिनानिपीडापायसंनैवेद्यंकुमुदोत्पलपुष्पपूजादशांगोधूपः नवोनवइतिपूजामंत्रः मुद्गतिलपंचगव्यंहोमद्रव्यंस
रशतंहुत्वामुद्गतिलैश्चंद्रायबलिंदद्यात्पंचदिनादारभ्यनवदिनांतेसुखीस्यात् ५ आर्द्रायांज्वरश्चेन्मृत्युर्दिनान्येकविंशत्पीडावासोहालकंनैवेद्यं
अगरुर्धूपः नमःशंभवेतिपूजामंत्रः मध्वाज्यंहोमद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वापायसान्नेनरुद्रायबलिंदद्यात् पंचदिनादारभ्यदशदिनांतेसुख
र्वसौज्वरश्चेत्सप्तदिनानिपीडा गुडौदननैवेद्यंमल्लिकापुष्पपूजामलयजोधूपः अदितिर्द्यौरिति पूजामंत्रः घृततंडुलाःप्रधानद्रव्यंगायत्र्याष्टोत्तरशतंहु
गंधमाल्योदनैर्बलिंदद्यात्सप्तदिनादारभ्यसप्तविंशद्दिनांतेसुखीस्यात् ७ पुष्येज्वरश्चेत्सप्तदिनानिपीडाखंडमंडकानैवेद्यंमल्लिकासरोरुहंचपुष्पं
[illegible]ति पूजामंत्रः घृतपायसंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधमाल्योदनैर्बृहस्पतयेबलिंदद्यात् दिनत्रयादारभ्यसप्तदिनांतेसुखीस्यात् ८ आ

... पीडा पायसंनैवेद्यं अनसीपुष्पपूजा घृतमंडो धूपः मधुवाताइति पूजामंत्रः दधिमध्वाक्तकृसरान्नं द्रव्यं गायत्र्याष्टोत्तरशतं हुत्वा...
ननागायबलिंदद्यान्नशांतिश्चेदष्टदिनांते मरणंस्यात् ९ मघायांज्वरश्चेन्मृत्युः एकविंशति दिनानि पीडा वा घृतपूरकंनैवेद्यंचंपकपुष्पपूजा गुग्गुल...
नुस्तोषमितिपूजामंत्रः घृतमधुमिश्रतिलाक्षतवटपत्राणिद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वातिलैःपितृभ्योबलिंदद्यात् नशांतिश्चेद्दशदिनांते मृत्युः १० पूर्व...
शदिनानिषष्टिपंचदशवापीडा रक्तमाल्यौदनंनैवेद्यंबिल्वफलधूपः अर्यमणंनुदेवमितिमंत्र घृतप्रियंगवः द्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधपु...
बलिंदद्यात् षट्दिनादारभ्यषष्टिदिनांते स्फरवीस्यात् ११ उत्तरायांज्वरश्चेदेकविंशति दिनानि पीडा कृसरंनैवेद्यं श्वेतकरवीरपूजा बिल्वफ...
...त्रः तिलमाषसर्पिर्व्रीहियवद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वातेरेवार्यम्णेबलिंदद्यात् अष्टादशदिनादारभ्य एकविंशति दिनांते ज्वरमोक्षः १२ हस्त...
...युः संदेहोवादिनानि पंचदशपीडा अपूपंनैवेद्यं रक्तकरवीरपूजा दशांगोधूपः उदुत्यमितिमंत्रः दधिघृतंद्रव्यं सावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणब...
पंचदशदिनादारभ्य एकविंशतिदिनांते सुखीस्यात् १३ चित्रायांज्वरश्चेद्दिनानि पंचपीडा मोदकंनैवेद्यं जपापुष्पपूजा दशांगोधूपः चित्रंदेवानामितिमंत्र...
...लमिश्रंघृतं चित्रौदनंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वात्वष्ट्रे घृतमिश्रमुद्गैर्बलिंदद्यात् सप्तदिनादारभ्य पंचविंशति दिनांते सुखीस्यात् १४ स्वात्यांज्वरश्चेत्षष्टि...
...नानिपीडा दध्योदनंनैवेद्यं दमनकपुष्पपूजा श्वेतागरुर्धूपः सनः पितेवेतिमंत्रः घृताक्तयवाद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेण वायवे बलिंदद्यात् द...
दिनादारभ्य चत्वारिंशद्दिनांते सुखीस्यात् १५ विशाखायांज्वरश्चेद्विंशति दिनानि पीडा गुडकंनैवेद्यं बंधूकपुष्पपूजा देवदारुर्धूपः शंनइंद्राग्नीइति पूज...

मंत्रः दुग्धौदनघृतंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वा पयोभिश्रितैर्गंधमाल्यैरिंद्राग्निभ्यांबलिंदद्यात् दशादिनादारभ्यविंशतिदिनांतेसुखीस्यात् १६ अनुर
धायांज्वरोत्पत्तिर्दशदिनानिपीडापायसाज्यंनैवेद्यं आरक्तपुष्पंचंदनंधूपः कर्पूरदीपः मित्रस्यचर्षणीधृतइतिपूजामंत्रः घृताक्तसूरणकंदं द्रव्यंसावित्र्या
ष्टोत्तरशतंहुत्वामधुशर्करापायसघृताक्तमाषान्नंमुद्गगंधपुष्पसहितंमित्रायबलिंदद्यात् पंचदिनादारभ्यदशदिनांतेसुखीस्यात् १७ ज्येष्ठायांज्वरश्चे
न्मृत्युःसंदेहोवापंचदिनानिपीडाचित्रौदनंनैवेद्यंपटोलीपुष्पपूजाकर्पूरागरुर्धूपः इंद्रंवोइतिपूजामंत्रः घृताक्तसूरणकंदद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वा
ष्पेणेंद्रायबलिंदद्यात्नशांतिश्चेदन्यतरांगतिंगच्छतीत्याश्वलायनोमांडव्यश्च १८ मूलेज्वरश्चेन्मृत्युःसंदेहोवादशदिनानिपीडामत्स्यमांस
ानैवेद्यंरक्ताशोकपुष्पपूजामेषशृंगोधूपः मोषुणःपराइतिपूजामंत्रः सघृतकंदमूलंद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वानिर्ऋतयेपायसान्नेनबलिं
पूर्वाषाढायांज्वरश्चेत्पंचविंशतिदिनानिपीडामंडकानैवेद्यंकल्हारपुष्पपूजामनःशिलाधूपः आपोहिष्ठेतिमंत्रः रक्तशालिद्रव्यंसावित्र्याष्टोत्त
रुणायपायसान्नेनबलिंदद्यात्चतुर्दिनादारभ्यविंशतिदिनांतेसुखीस्यात् २० उत्तराषाढायांज्वरश्चेद्विंशतिदिनानिपीडापंचभक्ष्यंनैवेद्य
पूजालाक्षाधूपः विश्वेदेवासआगतइतिमंत्रः घृतसल्लकीखंडानिद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वाविश्वेभ्योदेवेभ्यःपायसान्नेनबलिंदद्यात्
नादारभ्यविंशतिदिनांतेसुखीस्यात् २१ श्रवणेज्वरश्चेन्मासद्वयंपीडासंदेहोवाक्षीरशर्कराघृतमंडकानैवेद्यंजातीपुष्पपूजादशांगोधूपः अ
ंसावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणविष्णवेबलिंदद्यात् मासांतेवत्सरांतेवासुखीस्यात् २२ धनिष्ठायांज्वरश्चेत्पंचदशदि

[illegible]पत्रपुष्पपूजागुग्गुलुर्धूपः त्रायंतामिहदेवाइतिमंत्रः बिल्वोदुंबराश्वत्थसमिधोद्रव्यंसावित्र्याष्टोत्तरशतंहुत्वा घृतमिश्रमुद्गै[...]
लिंदद्यात् दशादिनादारभ्य पंचदशादिनांतेसुखीस्यात् २३ शततारायांज्वरश्चेद्दशादिनानिपीडाघृतमंडकांनैवेद्यंजलोद्भवपूजाकर्पूरागरुर्धूप[...]
रुणेतिमंत्रः अश्वत्थसमिधः द्रव्यंसावित्र्याष्टोत्तरशतंहुत्वावरुणायपायसेनबलिंदद्यात् षष्ठदिनादारभ्यद्वादशादिनांतेसुखीस्यात् २४ पू[...]
यांज्वरश्चेन्मृत्युःसंदेहोवाद्वाविंशतिदिनानिपीडादधिघृतंनैवेद्यंअर्कपुष्पपूजासर्वौषधिर्धूपः शंनाअजएकपादितिमंत्रः घृतकूष्मांडस्वं[...]
[...]व्याष्टोत्तरशतंहुत्वागंधमाल्यौदनैरजैकपादेबलिंदद्याद्दशादिनांतेशांतिर्मृतिर्वा २५ उत्तराभाद्रपदायांज्वरश्चेत्पंचदशादिनानिपीडागुडस[...]
[...]द्यंपंकजपत्राणिपुष्पंघृतधूपः विष्णोर्योनिमितिपूजामंत्रः घृतयुतमाषमुद्गाद्द्रव्यंसावित्र्याष्टोत्तरशतंहुत्वागंधपुष्पेणाहिर्बुध्न्यायबलिंदद्या[...]
[...]यांज्वरश्चेद्दशादिनानिपीडातिलतंडुलपिष्टंनैवेद्यंमंदारपुष्पपूजागुग्गुलुर्धूपः हंसःशुचिषदितिमंत्रः घृतान्नजलसहितकदलीफलानिचद्रव्यंसा[...]
ष्टोत्तरशतंहुत्वागंधपुष्पादिभिःपूष्णोबलिंदद्यात् पंचदिनादारभ्यविंशतिदिनांतेसुखीस्यात् २७ इतिदिनकरभट्टकृतेशांतिसारेनक्षत्रशांतयः [...]
थांशविभागेनरोगदिनसंख्यादैवज्ञमनोहरेगर्गः कृत्तिकासुज्वरस्तीव्रोव्याधिर्भवतिपैत्तिकः दशाहंप्रथमेपादेएवंज्ञात्वाविनिर्दिशेत् दशाद्द्विती[...]
भागेचतृतीयेदिनपंचकम् रोहिण्यांप्रथमेपादेनवरात्रंप्रकीर्तितम् द्वितीयेद्विगुणंप्रोक्तंतृतीयेदशरात्रकम् नक्षत्रेचंद्रदैवत्येसप्ताहंप्रथमेंशके म[...]
ध्यमांशेतथाविंद्याद्व्याधिर्द्वादशरात्रिकम् तृतीयेमुनिभिःप्रोक्तोदिनानांपंचविंशतिः नक्षत्रेरुद्रदैवत्येपक्षःस्यात्प्रथमेंशके द्वादशाहंद्वितीयेचतृती

शेनजीवति पुनर्वसौज्वरंविंद्यात्प्रथमेंशेत्रिपक्षकम् मध्यमेदिवसान्सप्ततृतीयेपंचविंशतिः पुष्येस्यात्प्रथमेसप्ताहिकेविंशतिवासरान् तृतीयांशे
भवेद्व्याधिर्दिवसानेकविंशतिः आश्लेषायांचनक्षत्रेयस्यसंभवतिज्वरः मासत्रयेणप्रागंशेकष्टैर्जीवतिमानवः द्वितीयेचतृतीयेचमृत्युरेवनसंश
नक्षत्रेपितृदैवत्येरोगोयस्यप्रकीर्तितः प्रथमेसप्तरात्रंस्याद्द्वितीयेद्वादशाहतः तृतीयेपंचदशभिरंतेविंशतिसंख्यया नक्षत्रेभगदैवत्येयस्यसंज
यतेज्वरः प्रथमेपंचरात्रंस्यान्मध्येद्वादशवासरान् तृतीयेंशेतथाज्ञेयोमृत्युरेवनसंशयः उत्तराप्रथमेंशेतुवासराणिचतुर्दश द्वितीयेसप्तरात्रं
तीयेदिवसानव यदिहस्तेभवेद्रोगःप्रथमेसप्तरात्रकम् चत्वार्यहानिद्वितीयेतृतीयेदिनपंचकम् मृत्युर्विंद्यात्तथापूर्वेत्वाष्ट्रेयस्यभवेज्ज्वरः
तुद्वितीयेंशेरोगोभवतिदारुणः तृतीयेंशेतथाज्ञेयोवासराणित्रयोदश वायव्येप्राक्सप्तदशद्वितीयेचैकविंशतिः अंत्येचैवतृतीयेंशेम
र्दिशेत् प्रथमेंशेविशाखायास्त्रिगुणाःषोडशस्मृताः द्वितीयेद्वादशप्रोक्तास्तृतीयेतुतथैवच मैत्रस्यादौषोडशाहाद्द्वितीयेपक्षमादिशेत्
तुःषष्टिवासराणांमहामुने त्रिपक्षंप्रथमेज्येष्ठाद्द्वितीयेस्यात्तुषोडश तृतीयेंशेपुनर्मृत्युरतिसारात्प्रजायते मूलांशेप्रथमेपक्षद्वितीये
तीयेनवरात्रेणक्लेशान्मुक्तोभवेन्नरः जलर्क्षादौत्रयोमासामध्यमेहानिषोडश तृतीयेमृत्युरेवस्याद्रोगिणांतुमहामुने विश्वर्क्षेप्रथमे
दशरात्रकम् दिनानांविंशतिःप्रोक्तानृतीयेंशेमहामुने सप्ताहमादौश्रवणेविंशतिर्मध्यमांशके षोडशाहंतृतीयेंशेसत्यमेतद्ब्रवीम्यहं
...प्रथमेमासयुग्मकम् मासस्तृतीयेविज्ञेयोदैवज्ञैश्वनिवेदितम् वारुणेदारुणोयोगस्त्रिपक्षंप्रथमेंशके द्वितीयेमासषट्क

...द्रपदायांच दिनाष्टादशकं पुनः मध्ये मरणकं विंद्यादंते षष्ठाहात्सुखी भवेत् अहिर्बुध्न्ये पक्षमादौ मध्ये षोडशरात्रकम् अंते षष्ठा...
र्ज्ञेया पीडा स्यात्पापकर्मभिः रेवत्यां प्रथमेंऽशेष्टौ द्वित्रिभागे च षोडश दस्त्रे दशाह पूर्वांशे मध्ये सप्तदशाहतः अंते त्रिंशद्दिनानीति कथितं पूर्वसूरि...
ण्यां प्रथमेंऽशे च सप्तवासरमेव वा मध्ये मृत्युस्तथांत्येंऽशे रोगो मासत्रयावधिः एवं ज्ञात्वा सुधीः सम्यक् शांतिं कुर्वीत यत्नतः इति दिनकर भट्ट...
रे नक्षत्रांशवशेन रोगदिनविवेकः अथ पंचकमरणादि शांतिः पंचकं च नक्षत्रपंचकं सार्धचतुष्टयं वा कुर्यान्न दारुतृणसंग्रहमंतकाशायानं मू...
पनं च शय्यावितानमिह वासव पंचकं चेत्केचिद्वदंति परतो वसुदैवतार्धादिति दैवज्ञमनोहरोक्तेः अत्र च मरणमप्यनिष्टावहम् त्रिपुष्करेपि मरण...
नेपादभे मरणमात्रम् तत्तन्निमित्तशांतिविधिषु तथा निर्देशात् त्रिपुष्करमाह भूपालवल्लभः रविभौममंदवारे भद्रातिथिषु त्रिपादके धिष्ण्ये...
ारव्यो द्विपादके यमलनामा स्यात् रत्नकोशे तु गुरुभौममंदवारे भद्रायां विषमपादर्क्षे योगस्त्रिपुष्करोयं त्रिगुणफलो यमलभे द्विगुणम् गर्गः पौ...
णितं त्रिगुणं च त्रिपुष्करे यमले द्विगुणं सर्वं हानिवृध्यादिकं भवेत् तत्र पंचकमरणे न दुस्तरं तद्दैववादाहः कार्यः कुंभमीनस्थिते चंद्रे मरणं यस्य जायते...
कानंतरं कार्यं तस्य दाहादिकं खलु अथवा तद्दिने कार्यो दाहस्तु विधिपूर्वकम् इति मदनरत्ने ब्राह्मात् पंचकाभ्यंतरे नैव कार्यो दाहादिका क्रिया पुनर्मृत्यु...
यात्तस्मात्पंचकानंतरं शुभे इति दैवज्ञमनोहरे गारुडाच्च तत्रैव कारिकायाम् सद्योदाहादिकं कार्यं पंचकर्क्षमृतस्य च वक्ष्यमाणविधानेन प्रायश्चित्तपुरःसर...
चत्वारः पुरुषा दर्भमयाः शवसमीपतः तन्मंत्रैर्मंत्रिताः स्थाप्यास्ततो दाहस्तु तैः सह सूतकांते तु पुत्राद्यैः कार्यं शांतिकमुक्तवत् कांस्यपात्रघृतं दद्यात्कुर्या...

ब्राह्मणतर्पणम् मदनरत्नेगारुडे आदौकृत्वाधनिष्ठार्धमेतन्नक्षत्रपंचकम् रेवत्यंतंसदादूष्यमशुभंदाहकर्मणि शवस्यचसमीपेतुक्षेप्तव्याः पुत्तलास्तद
दर्भमयास्तुचत्वारऋक्षमंत्राभिमंत्रिताः ततोदाहः प्रकर्तव्यस्तैश्चपुत्तलकैःसह सूतकांतेततः पुत्रैःकार्यंशांतिकपुष्टिकम् पंचकेषुमृतोयोवैनगतिंलभ
नरः तिलांश्चैवहिरण्यंचतमुद्दिश्यघृतंदहेत् तत्रैवब्राह्मे धनिष्ठापंचकेजीवोमृतोयदिकथंचन त्रिपुष्करेयाम्यभेवाकुलजान्मारयेद्ध्रुवम् तदानिष्टविन
शार्थंविधानंसमुदीर्यते दर्भाणांप्रतिमाःकार्याःपंचोर्णासूत्रवेष्टिताः यवपिष्टेनानुलिप्तास्ताभिःसहशवंदहेत् प्रेतवाहःप्रेतसखःप्रेतपःप्रेतभूमिप
हर्तापंचमस्तुनामान्येतानिचक्रमात् अत्रप्रतिमागंधमाल्याद्यैरलंकृत्यप्रथमांशवस्यशिरसिद्वितीयांनेत्रयोस्तृतीयांवामकुक्षौचतुर्थींनाभौपंच
र्यस्यतदुपरितन्नामभिर्घृतंहुत्वापुनर्यमायसोमंत्र्यंबकमितिमंत्राभ्यांप्रत्येकंतास्वाज्यंहुत्वादहेदितिभट्टाः सूतकांतेततःपुत्रःकुर्याच्छांतिव
स्यपात्रस्थितंतैलंवीक्ष्यदद्याद्द्विजन्मने ब्रह्मविष्णुमहेशेंद्रवरुणप्रीतयेततः माषमुद्गयवव्रीहिप्रियंग्वादिप्रयच्छति स्वर्णदानंरुद्रजाप्यं
र्चनं गोभूदानंषडंशेनकुर्याद्दोषोपशांतये अपरार्केपि धनिष्ठापंचकमृतेपंचरत्नानितन्मुखे प्रास्याहुतित्रयंतत्रहुनेद्दहवपामिति तत
दोषसाम्येर्विधिस्मृतः इतरनिखनेदेवजलेवाप्रतिपादयेत् तत्रैव नीलकंहीरकंनीलंपद्मरागंचमौक्तिकं पंचरत्नमिदंप्रोक्तमृषिभिःपूर्वदर्शिभिः
प्यभावेतुस्वर्णकर्षार्धमेववा सुवर्णस्याप्यभावेतुआज्यंज्ञेयंविचक्षणैः धनिष्ठायांविशेषमाहबौधायनः वासवेमरणंचेत्स्याद्गृहेवापिपुनर्मृ
...रुत्रमथापिवा अथत्रिपुष्करादिशांतिः मदनरत्नेगर्गः द्वित्रिपुष्करयोगेतुमृतिर्मृत्यंतरावहा दहनेमरणेचैवत्रिगुणंस्या...

...स्याद्दाहाद्दोषोपशांतये तिलपिष्टैर्यवैर्वापि शरीरंतस्यकारयेत् शूर्पेनिधायालंकृत्यदाहयेत्तैनृकोपरि दाहमंत्रमाहबोधायनः

मितिमंत्रेणतिलपिष्टंप्रदापयेत् द्वित्रिपुष्करयोर्दोषंत्रिभिः कृच्छ्रैर्व्यपोहति दैवज्ञमनोहरेगारुडे त्रिपुष्करेत्रयः कार्याः पुत्तलाद्वौद्विपुष्करे मृ...

पेतुस्थाप्याः पिष्टमयास्ततः कार्योदाहस्तुतत्सार्धंसूतकांतेतुशांतिकं कृत्वागाश्चहिरण्यंचदद्याद्वित्तंचशक्तितः तत्रैवप्रेतखंडे त्रिपुष्करमृ...

मूल्यमेववा द्विपुष्केरत्वगोयुग्मंततोदाहोनदोषकृत् अथत्रिपादशांतिः अपरार्के पुनर्वसूत्तराषाढाकृत्तिकोत्तरफाल्गुनी पूर्वाभाद्राविशा...

तत्त्रिपादभं त्रिपादर्क्षमृतौतद्वद्धिरण्यशकलंमुखे तस्यपिष्टमयंकुर्यात्पुरुषत्रितयंयतः होमंप्रतिमुखंकुर्यात्तथावहचपामिति कर्णायसंच...

नतिपाद्यच निर्यात्यसाग्निंसंस्कुर्याद्भुव्यग्नौवान्यमुत्सृजेत् मरणपद्धतौभट्टाः स्वगृह्योक्तविधानेनकृत्वाग्निस्थापनंततः अन्वाधानंनि...

तथाहुतीः यमायधर्मराजायमृत्यवेचांतकायच औदुंबरायदध्नायनीलायपरमेष्ठिने वृकोदरायचित्रायचित्रगुप्तायवैक्रमात् विधिनाग्नौ...

एकैकामाहुतिंहुनेत् कृष्णांगांकृष्णवस्त्रांचहेमनिष्कसमन्वितां दद्याद्विप्रायशांतायप्रीतोभवतुमेयमइति इयंशांतिःपंचकादिसाधारणी विशे...

लायां धनिष्ठापंचकेयाश्चदेवताश्चत्रिपुष्करे ताः पूज्यास्तुप्रयत्नेनमंत्रैस्तल्लिंगसंज्ञकैः तिथिवारौचनक्षत्रंत्रिपुष्करइतिस्मृतः सर्वेषामपितेषांतुत्रै...

देवाःप्रकीर्तिताः यमोरुद्रश्चमघवासंपूज्योविधिवद्बुधैः कुबेरस्यपृथक्पूजाविधातव्यामनीषिभिः होमंचविधिवत्कुर्यान्नक्षत्रशमनोचितं सामान्यं

हविस्तेषांसाज्यंपायसमुत्तमं मंत्राभावेचगायत्रीपालाशयः समिधस्तथा होमांतेयजमानस्यविदध्यादभिषेचनं लक्ष्मीसूक्तंजपेत्पश्चाद्दद्याद्दानानि

रिशः लक्ष्मीनारायणप्रीत्यैमंत्रकंत्रसतूलिकं वृषंगजंचमहिषंलोहंताम्रंचराजतं एतन्निर्मूलमितिशिष्टाः इतिशांतिसारेपंचकादिमरणशांतिः अथद्वादशा
दूर्ध्वमवलोकनविधिः स्मृत्यंतरे दंपतीपितृपुत्रौचस्वसारौभ्रातरौतथा पितृव्यमातुलौचैवदौहित्रौभागिनेयकौ पुत्रिकापितरौचैवभगिनीपितरौतथा द्वादशा
व्यतीतेतुदूरदेशंगतोयदि एतेषामेकमेकोपिनान्योन्यमवलोकयेत् इच्छंतिकेचिदाचार्या अन्योन्यमवलोकनं शिवालयेथवातीर्थेस्नात्वाप्रज्वाल्यदीपकौ शि
संपूज्यविधिवद्भौतौदेवमध्यतः धृत्वाकांस्यमयंपात्रंसजलंरत्नपूरितम् शांतिकैर्मंत्रघोषैश्चद्विजैःसहविलोकयेत् आननंचैकमेकस्यदृष्ट्वासम्य
नमेत् ब्राह्मणेभ्योयथाशक्त्यादद्यात्पात्रंसदक्षिणम् अन्येभ्यश्चार्थविप्रेभ्योयथावित्तानुसारतः तेभ्योपिदक्षिणांदत्वापूजयेच्चपुनःपुनः नत्वा
पूर्यमागच्छेत्स्वस्यमंदिरं ततोव्याहृतिभिर्होमंशतमष्टोत्तरंतिलैः कृत्वाथभोजयेद्विप्रान् यथावित्तानुसारतः बांधवैःसहभुंजीतसर्वारिष्टप्रशांत
रुतेमर्त्यस्तस्यारिष्टंनविद्यते आयुष्कामोनरश्चैवमकृत्वानावलोकयेत् पूर्वविलोकितानांतुविधिरेषउदाहृतः नचैवापूर्वदृष्टानामितिप्राहुर्म
रिजाते द्वादशाब्देव्यतीतेतुनकुर्याद्भ्रातृदर्शनम् पित्रोःपुत्रस्यनैवाहुर्महाहानिकरंभवेत् दर्शनंतुप्रकुर्वीतशिवंपूज्यशिवालये कांस्यपात्रं
तःपटविधानतः मुखावलोकनंपश्चात्समालिंग्यविपर्ययात् एवंकृतेविधानेतुदोषशांतिर्भविष्यति सूर्यारुणसंवादेतु गणेशमृत्युंजयविष्णु
संज्ञंचग्रहंघटेषु आवाह्यसंपूज्यचधान्यराशौहोमंचकुर्यादिहदेवमंत्रैः शिवपूजांप्रकुर्वीतप्रतिमापूजनंततः अघोरप्रतिमांदद्याद्ब्राह्मणायस
[illegible]त्वंक्रीडस्वचक्रुरवंचिरम् मांतथैवाधुनामुंचक्षमांकुरुममोपरि शिवायेतुसमागत्यकृत्वाचैवांतरेपटम् उभाभ्यांनारिकेलंचभङ्

...सूक्तंजपत्वादावघोरद्विजपुंगवम् अघोरमतिग्राहिणंब्राह्मणमित्यर्थः विसर्जयेत्पुनस्तंचनैवपश्येत्कदाचन कांस्यपात्रेघृतंकृ...
त्वारूपंस्वकंस्वकम् तत्पात्रंब्राह्मणेदद्याद्दक्षिणासंयुतंततः पादप्रक्षालनंकृत्वाआचम्यचयथाविधि शांतिमंत्रान्पठेत्सम्यक्पूजांगृह्यशिवंव्रजेत् धू...
नैवेद्यंतांबूलैर्दक्षिणादिभिः वस्त्रैराभरणैर्दिव्यैस्तोषयेच्छंकरंततः शिवस्यप्रार्थनांकृत्वाजपेत्सूक्तंकनिक्रदत् प्रदक्षिणीभद्रंचेतिपठेत्सूक्तंधि...
ष्पांजलिंचयुगपद्दद्याच्चैवांतरंपटम् पुनःपुनर्नमस्कृत्यपश्चात्तंचविलोकयेत् प्रणामालिंगनंकुर्यात्स्वागतंक्षेमपृच्छनम् ततोद्विजवराःसर्वेस्व...
स्तिकानिच पठित्वाहोमदेशंचगच्छेयुश्चमुदान्विताः प्रतिमापूजनंकृत्वावन्हेश्चापियथाक्रमम् होमशेषंसमाप्यैवंब्रह्माचार्यादिकान्यजे...
ततःकुर्युरुभयोर्मंगलंवदेत् स्वस्तिशब्दंतथाब्रूयुर्गांचदद्यात्पयस्विनीम् देवान्वन्हिंविसृज्याथकुंभेलक्ष्मींनिधायच आचार्यब्रह्मऋत्वि...
ष्पुरःसरम् स्वगृहंचशनैर्गच्छेत्सार्धंतेनप्रवासिना देवानांचैवतृप्त्यर्थंकर्तव्यंद्विजभोजनम् एवंकृतेविधानेतुनस्याद्विघ्नंकदाचन देवा...
दनकल्याणंस्यान्नसंशयः आयुष्यंक्षेममारोग्यंपुत्रपौत्रप्रवर्धनम् सौभाग्यमतुलंचैवलभेदस्यप्रसादतः आरामेपुण्यतीर्थेवादेवागारेथसं...
न स्वपवित्रनदीतीरेविधानंक्षेमदंभवेत् अथप्रयोगः स्वमुहूर्तेचंद्रताराबलान्वितेपुण्याहंवाचयित्वाचार्यब्रह्मर्त्विगादीन्कृत्वादेशकालौसंकीर्त्या...
स्माकंसकुटुंबानांक्षेमायुरारोग्यैश्वर्याभिवृद्ध्यर्थंसर्वत्रमंगलाभ्युदयार्थमात्मनोबंध्वादीनांद्वादशाब्दाधिकप्रवासस्थितिजनितपापग्रहपीडापरिहा
रार्थंवियोगग्रहशांतिंकरिष्यइतिसंकल्प्यतदंगस्थंडिलोल्लेपनकलशस्थापनेकरिष्यइतिसंकल्प्यदधिदूर्वामृत्संचगव्यसर्वौषधीहिरण्यरत्नफलपुष्पपं

चपल्लवाद्यलंकृतेषुपंचधान्यपुंजस्थितपंचकलशेषुतीर्थवारिणापूर्णेषुस्थापितवंशपात्रोपरि अष्टदलालंकृतवस्त्रेषुगणेशमृत्युंजयविष्णुलक्ष्म्यघोरप्र
तिमानामग्न्युत्तारणंकृत्वातत्तन्मंत्रैः कलशावाहनपूजनस्थापनादिपूर्वकंतत्तन्मंत्रैस्तत्तद्देवतानामावाहनादिपूजांकुर्यात् ततोन्वाधानंकृत्वातत्तदुद्देशे
नप्रतिदैवतंदूर्वातिलाज्यचरुशर्कराभिरष्टसहस्रमष्टशतमष्टाविंशतिंवाहुतीर्हुत्वा अघोरमंत्रेणाघोरायहुत्वारुद्राभिषेकंकृत्वाशिवालयेंतःपटंधृत्वो
वपियुगपच्छिवस्यपुरतोनारीकेलफलंप्रत्येकंभङ्क्त्वाहोमदेशंगत्वानिवर्तध्वमितिसूक्तंजपेताम् ततोघोरंप्रार्थयेताम् अघोरत्वंमहाकायनृणां
षकारक त्वत्क्षोभजनितंघोरंनृणांविश्लेषजंफलम् वियोगविषमाक्षस्त्वंविषमांघ्रिकरायुध विबुद्धिर्विगतस्थायीविलापीविगताश्रयः यो
गगध्वंसीयोगीयोगविघातकः नृनार्योर्योगहंताचबंधुयोगवियोगकृत् गच्छत्यनुदिनंचोर्वीप्राणिनांक्लेशहेतवे योगविश्लेषकार्यत्व
मप्रचक्षते भावियोगमहाघोरप्राणिनांक्लेशदायक शरणागतमापन्नंत्राहिमांशोकसागरात् द्विजंसमभ्यर्च्याघोरप्रतिमांदद्यादाज्यावेक्ष
तिमंत्रान्जपित्वापादौप्रक्षाल्यशिवंगंधपुष्पैस्तोषयित्वास्वस्तिनोआनोभद्राकनिक्रदत्प्रदक्षिणिभद्रंवदेतिसूक्तानिपठन् अंतःपटंनिष्कास्य
वोपरिपुष्पांजलिंदत्वामुहुःशिवंनमस्कृत्यसंप्रार्थ्यबंधुंविलोकयेत् तौप्रणामक्षेमालिंगनेकृत्वास्वागतंपृष्ट्वायेयज्ञेनेत्याशिषोदत्वाहोमशे
षिष्ठेकंकृत्वाग्न्युद्वासनंकृत्वाकुंभेलक्ष्मीप्रतिमांनिधायवाद्यघोषपुरःसरंब्राह्मणैःसहप्रवासिनाचसहगृहंप्रविशेत् ततोब्राह्मणान्संभोज्याहि
[illegible] भिः संतोष्य स्वस्ति भवंतोब्रुवंत्वितिब्रुयान्तेचस्वस्तिरस्त्वितिप्रत्यूचुः इतिप्रवासादागतग्रहविधानं अथतडागादौमृत्त

[illegible] नदीनदसमुद्रेषुमृतदोषोनविद्यते वापीकूपतडागेषुमृतस्यस्शुद्धिरिष्यते सूतकानंतरंशुद्धिः शौनकेनह्युदीरिता उद्धरेच्छतसाहस्रंतदधो
वा अष्टोत्तरसहस्रंवाकलशैर्जलमुद्धरेत् मृततारतम्येनब्राह्मणादिवर्णभेदेन गवादिपशुभेदेनकलशोद्धारणंप्रयोगंविधिवत्कृत्वाजातदोष
जलदेवार्चनंकार्यंमंडलेभद्रसंज्ञके जलदेवतावरुणः सदीपंचबलिंदद्याद्देवताभ्योयथाविधि एवंपूजाविधातव्यातनोहोमंसमारभेत् ले
भ्योजलाधिपतयेतथा अष्टोत्तरशतंचैवप्रत्येकंतिलसर्पिषा जलशुद्धिंततःकुर्याद्ब्रह्मकूर्चपुरःसरं मृत्तिकाभिश्चतोयैश्चतिलामलक
श्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् राजद्वाराच्चतुष्पथादितिमृदः जलानिनदीनदसमुद्रगंगादिजीर्णकूपप्रस्रवणोदकैः यज्ञकु
लकशंखोदकविष्णुपादोदकैर्जलावगाहनं पावमानीभिःप्रायश्चित्तसूक्तैः पौरुषंपावमानंचनतमंहइतीतिच ऋस्वसूक्तंजपेत् अन्यान्यपि
जलमवगाह्यशांतिंपठेत् कस्यनूनमित्यादीनि स्वस्तिवाचनपूर्वंतुहोमशेषंसमापयेत् अभिषेकंततःकृत्वाब्राह्मणान्भोजयेदथ दक्षिणाभि
तेभ्यआशिषोगृहीत्वाजलशुद्धिर्भवेद्ध्रुवं इतिजलशुद्धिः अथगजशांतिः वसिष्ठसंहितायाम् यस्यराज्ञोगजाःसंतितदधीनाखिलाधरा तस्माद्ग
ल्पनीयाःपोषणीयाश्चसर्वदा कल्पनंपोषणंतेषांगजवक्त्रप्रसादतः तस्माद्गजाननोराज्ञापूजनीयःप्रयत्नतः गजाननोगजपतिर्गजसूक्तंजपेत्सदा
सावेवप्रभुस्तेषांपोषणेशोषणेसदा पुरामहेश्वरोदेवउक्तवानस्यजन्मनि यदायदागजानांचजायंतेव्याधयस्तदा तदाशांतिंप्रकुर्वीतपूजाहोमजपा
भानुवारेचसंक्रांतौग्रहणेचंद्रसूर्ययोः विषुवत्ययनेचैवव्यतीपातेदिनक्षये अन्यस्मिन्पुण्यदिवसेचंद्रताराबलेष्वपि दिग्बंधनंसमेभूमौईशान्येचस

लये मध्याद्विनिर्गतैः सूत्रैश्चतुरस्रंतुकारयेत् मंडपंत्वष्टभिर्हस्तैः सूत्रमार्गेणकारयेत् चतुःषष्टिदलंकृत्वामंडपांतःक्षमातले मध्येचतुःपदेव्योमम
वेदिकास्थलं द्वादशांशात्मकंवायुमंडलंव्योमवेष्टितं विंशांशकात्मकंवन्हिमंडलंव्योमवेष्टितं निखिलान्मंडलान्वेष्यामहीमंडलमास्थितं ज्ञात्वाभिमं
त्रदिक्षुकुंडचतुष्टयं प्राग्रेखामध्यमंकुंडं द्वारंचैकांशमानतः तथैवकुंडद्वारंचशेषदिक्षुप्रकल्पयेत् पूर्वोक्तलक्षणोपेतंमेखलावप्रसंयुतं तोरणा
कृत्यवितानंवेदिकोपरि आशिषोवाचनंकुर्यात्सम्यक्संकल्पपूर्वकम् ऋत्विजोवरयेत्सभ्याच्चतुर्विंशतिसंख्यकान् तेषांमध्येशिष्टतममाचार्यं
येत् मधुपर्कादिकंकृत्वातत्तत्कार्येनियोजयेत् ब्राह्मणांश्चतुरोहोतृन्कुंडेषुविनियोजयेत् द्वारेषुजापकानष्टौषट्संख्यानंगजापकान् गंधप
त्वातत्रकार्येप्रयोजयेत् ब्रह्मणःपंचविप्रांश्चयोजयेच्चयथाविधि कारयेत्तुसुवर्णेनगजवक्त्रंचतुर्भुजम् अक्षमालापरश्वधबीजदंतधरं
धवर्णादिसर्वेषांकथितंपुरा तत्पुरुषायविद्महेवक्रतुंडायधीमहि तन्नोदंती प्रचोदयात् वामदेवऋषिः छंदोसौतत्रगायत्रीगजवक्त्रोस्यदे
चतुर्द्वारेपूर्वोक्तद्रव्यसंयुतं लिखेदष्टदलंपद्मंवेदिकातंदुलोपरि गजवक्त्रंकर्णिकायांलोकपालान्दलेषुच गणेशशक्रयोर्मध्येपद्ममष्टदल
त्यादियहास्तत्रपूजयेत्पूर्ववत्क्रमात् गणेशयमयोर्मध्येपंचकोणंप्रकल्पयेत् तत्रपंचमहाभूतानर्चयेत्पूर्ववत्तदा गणेशांबुपयोर्मध्येत्रिको
त् तत्रार्चयेदष्टभुजांमहिषासुरमर्दिनीं गणेशसोमयोर्मध्येवर्तुलंमंडलंलिखेत् तत्रार्चयेत्प्रयत्नेनचाश्विनीदेवताद्वयम् ऐशान्यामर्चयेद्रुद्र
[illegible]श्राग्नेय्यामर्चयेद्विष्णुमंडलंहाटकात्मकं वेदात्मकंचनैर्ऋत्यामर्चयेद्ब्रह्ममंडलं वायव्यामर्चयेत्सम्यग्मंडलंप्रणवात्मकं रुद्रेणपुरुषसू

...णवस्यत्वऋषिश्छंदोदेवताकथितापुरा तत्तद्वर्णैर्गंधपुष्पैर्वस्त्रधूपैश्चदीपकैः सम्यक्कृत्वोपचाराणिरक्तवस्त्रैर्गजाननम् प्रा
वक्रस्यपंचभूतात्मकंततः दुर्गाकुंडंप्रतीच्यांचउदक्कुंडंग्रहात्मकम् तदेवाश्विनकुंडंचग्रहहोमादितःपरं दिक्कुंडेदिक्षुदिक्होमःकर्तव्यःस्वस्व
स्वगृह्यविधिनाकुंडेस्थापयेच्चहुताशनम् मुखांतेस्वस्वकुंडेचजुहुयात्तन्मुखाहुतिम् पालाशसमिदाज्यान्नैःपृथगष्टोत्तरंशतम् ग्रहमंत्रै
मंपूर्ववदाचरेत् चतुर्दिक्षुचतुर्वेदपारायणपराद्विजाः अब्लिंगैर्वारुणैःसूक्तैःकलशार्चापराश्चते नैवेद्यंविविधान्नेनबहुवाद्यैःसमर्पयेत
दद्याच्छांतिवाचनपूर्वकम् एकरात्रंत्रिरात्रंचनवरात्रमथापिवा अनेनविधिनाकुर्यादेकभक्तोजितेंद्रियः तिलहोमंव्याहृतिभिःसहस्र
एवंप्रतिदिनंसम्यग्व्रीहिभिश्चयथापुरा संपूर्णेदिवसेकर्ताकुर्यात्पूर्णाहुतिंततः मंत्रपूतोदकैःकर्तागजानांमार्जयेत्ततः अलंकृत्यपुनःस
दिभिस्तथा हुतशेषंततोदद्यादोपनायनिकंगजे दोषशांत्यैपंचदुर्गारुद्रंपुरुषसूक्तकम् पंचब्रह्मादिभिर्मंत्रैर्गजशालासुमार्जयेत् गृहीत्वार
दक्षिणांचसमर्पयेत् आचार्यायततोदद्यान्निष्काणामेकविंशतिम् तदर्धमितरेभ्यश्चयजेच्छेषान्स्वशक्तितः ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीत
एवंयःकुरुतेसम्यग्गजशांतिंनृपोत्तमः सर्वान्कामानवाप्नोतिगजवृद्धिंलभेत्तुसः इतिगजशांतिः अथाश्वशांतिः तत्रैव भूपतेर्यस्यसंत्यश्वाःसएवा
यीरणे श्रीमान्सएवतत्तस्मात्कार्यमश्वाभिरक्षणम् सूर्यस्वात्यृक्षसंपातेजायंतेबहवोरुजः यदायदारुजननमश्वानामथवातदा सलोकपालरेवंत
जांहोमंचकारयेत् भानुवारेचसंक्रांतावयनेविषुवद्वये दिनक्षयेव्यतीपातेद्वादश्यामश्वभेपिवा ऐशान्यामष्टभिर्हस्तैश्चतुर्भिर्वापिमंडपम् चतुर्द्वारं

तानस्त्रक्तोरणाद्यैरलंकृतम् तन्मध्येवेदिकांतस्य पंचविंशतिमानतः मंडपस्यबहिः कुंडं प्राच्यांपूर्वोक्तलक्षणम् वरयेत्पूर्ववद्विप्रान्स्वस्तिवाचनपूर्वकम् सू
ऽंहयारूढंपंचवक्त्रंदशांबकम् रक्तवर्णंकशाखड्गं रेवंतंद्विफजंस्मरेत् सूर्यपुत्रनमस्तेतुनमस्तेपंचवक्त्रक नमोगंधर्वदेवायरेवंतायनमोनमः मंत्रेणाने
रेवंतंगंधवस्त्राक्षतादिभिः विधिवद्वेदिकामध्येतंडुलोपरिपूजयेत् परितःस्वस्वमंत्रैस्तान्लोकपालांश्चपूजयेत् प्राग्वद्देवकशांखड्गंरेवंतस्यसमीपत
ऋग्वेदादिचतुर्वेदान्जपेद्द्वारेषुपूर्ववत् पूर्णकुंभान्रक्तवर्णान्गंधवस्त्राद्यलंकृतान् पंचलक्ष्मपल्लवोपेतानष्टमृद्भिःसुसंयुतान् द्वारेषुस्थाप्यचाब्लिंगमंत्रै
र्यैसमर्चनम् रेवंतपूजामाचार्यःकृत्वागृह्यविधानतः स्थापयेच्चव्याहृतिभिस्तस्मिन्कुंडेहुताशनम् ततस्तत्राज्यभागांतेमुखाहुतिमतंद्रितः अ
हेतिहुत्वाघृतेनादौप्रयत्नतः रेवंतपूजामंत्रेणआद्यंतप्रणवेनच पलाशसमिदन्नाज्यैःपृथगष्टोत्तरंशतम् आचार्योजुहुयाद्ध्रींह्रींस्तिलान्व्याह
एकरात्रंत्रिरात्रंवानवरात्रमथापिवा अनेनविधिनाकुर्यादेकभक्तोजितेंद्रियः जपादिपूर्वकंसम्यक्कर्त्तापूर्णाहुतिंहुनेत् ततोमंगलघोषैश्चनैवे
न् ततस्तद्धुतशेषेणसहकुंभोदकेनच प्रदक्षिणंव्रजन्नश्वान्सुप्रीतोबलिमुत्तमम् जीमूतस्येत्यनूवाकांश्चतुरोदिक्षुनिक्षिपेत् आचार्याय
णांगोचतुष्टयम् तदर्द्धंवातदर्द्धंवायथावित्तानुसारतः ब्राह्मणेभ्योजापकेभ्यस्त्वाचार्यार्द्धंप्रदापयेत् ब्राह्मणान्भोजयेत्पश्चाच्छांतिवाचनपू
कुरुतेसम्यगश्वशांतिमनुत्तमाम् मुच्यतेसर्वरोगेभ्योवर्द्धंतेनात्रसंशयः इत्यश्वशांतिः अथगजनीराजनम् उत्पलपरिमलेशौनकः नव
ऽऽऽमथवापिवा हस्तिनीराजनंकुर्याद्राजागजसमृद्धये प्रागुदक्प्रवणेदेशेविशालेसुमनोहरे पूर्वस्यामुत्तरस्यांवानगरस्यबहि

...णंदेशंसंप्रोक्ष्यवारिणा तन्मध्येतोरणंकुर्याद्वनस्पतिमयंशुभम् स्योनापृथिवीत्यनयास्थापितंस्कंददृढंसमम् षोडशा...
धाद्विस्तारेणतदर्धकम् ऋजुनिरीक्षणंस्निग्धंवस्त्रयुग्मविभूषितम् उच्छ्रयस्वेतिमंत्रेणसंप्रोक्ष्यपरितोजनैः अन्यैश्चैवाब्लिंगमंत्रैर्गंधपुष्पै...
त् कोणस्तंभद्वयेवेदिंद्विहस्तेकारयेदथ फलपुष्पैस्तबककिसलयैर्भूषयेत्ततः होमंतद्दक्षिणेकुर्यात्समाहितमनागुरुः कुंडेवास्थंडिले...
प्रकल्प्यच पूर्णकुंभानष्टदिक्षुविन्यसेद्धान्यराशिषु तेष्वावाह्यदिशांपालान्पूजयेद्वस्त्रमाल्यकैः योजातइतिसूक्तेनप्रत्यृचंजुहुयाद्घृ...
सआज्येनसूक्तेनाज्यंयजेत्ततः आविदित्यादिसूक्तेनयाम्यहोममतःपरम् एवंकृत्वातुविधिवन्निवृत्तेजुहुयाद्घृतम् यच्चिद्धितेति...
रुणायच आवायाविवितिसूक्तेनयजेद्वायुंसमाहितः त्वंसोमप्रतिसूक्तेनसोमायजुहुयाद्धविः पश्चाद्रौद्रेणकौत्सेनरुद्रमिष्ट्वायथाक्रम...
द्रेतिसूक्तेनहोमशेषंसमापयेत् वरुणायैवमिष्ट्वाथमधुनापयसातथा पश्चात्स्विष्टकृतंहुत्वाबलिंतेभ्यःसमाहरेत् दुर्गामाराध्यविधिवद...
स्वयम् कृत्तिकाश्चसमभ्यर्च्यवस्त्राभरणमाल्यकैः हिरण्यकुसुमंसिंहीममृतांचापराजिताम् पृश्निपर्णींततोव्याघ्रींदूर्वामुत्पलमालिनीम्
नपद्मानिनलदान्यगरूणिच प्रक्षिप्यकुंभेसौवर्णेतीर्थतोयैःप्रपूर्यच गजाधिपंगजांश्चैवप्रोक्षयेत्तेनवारिणा आपोहिष्ठेतिसूक्तेनस्वस्तिवाच...
थाविधि गजमारोप्यराजानंतोरणाभ्यंतरेगुरुः स्वस्त्यात्रेयंजपेन्मंत्रंत्रिःकृत्वातुप्रदक्षिणम् प्रस्थापयेत्प्रभुंतेनगजेंद्रेणद्विजोत्तमः पार्श्वतोदी...
मानास्कंदीपिकास्कंधदीपकैः सारोहाःसादिनःसर्वेगच्छेयुस्तस्यपृष्ठतः उपलिप्तास्कशालास्कस्वास्तृतासुविसृज्यतान् सामात्योभृत्यसहित...

विशेन्मंदिरंनृपः ब्राह्मणान्भोजयित्वातु गुरवेदक्षिणांततः हस्तिनंगांहिरण्यंचवस्त्रंमाल्यानुलेपनम् दद्यान्नृपःस्वयंतस्मैसम्यगाभरणानिच एवंनी
जनाद्राजासर्वान्कामानवाप्नुयात् निरतं काद्विजाःसर्वे भविष्यंतिनसंशयः इतिगजनीराजनम् अथाश्वनीराजनंतत्रैवोक्तम् अश्वनीराजनंव
अश्वानांहितकाम्यया तद्वच्चैवाश्वयुङ्मासि पूर्वपक्षेनृपोत्तमः कारयित्वाश्वशालासुहोमशालामलंकृताम् प्रत्यूषेस्नापयित्वाश्वान्सम्यकृतीर्थैज
ये सप्ताहंकारयेद्धोमंरक्षांबध्वानुरंगमान् स्थंडिलाद्याज्यभागांतंयज्ञतंत्रंप्रकल्पयेत् ब्राह्मणःसोदकान्कुंभांश्चतुर्दिक्षुसहोषधीन् विन्यस्य
षुदिक्पालांस्तत्रपूजयेत् अश्वमारोप्यराजानंतोरणाभ्यंतरेगुरुः गजस्यनीराजनवत्सर्वंकुर्यादतंद्रितः एवंनीराजनाद्राजासर्वान्कामानवाप्नु
अश्वनीराजनम् अथगोशांतिः मदनरत्नेविष्णुधर्मे अतःपरंप्रवक्ष्यामिकर्मनैमित्तिकंतव धेनूनांमारकेप्राप्तेतथारोगाद्युपद्रवे क्षीरक्ष
न्यकृतेस्तुविपर्यये त्रिरात्रोपोषितोविद्वानेकरात्रोषितोपिच गवांमध्येसुभेदेशेस्थंडिलेग्निंप्रकल्पयेत् अष्टपत्रंन्यसेत्पद्मंकर्णिकाकेसरा
र्णिकामध्येवासुदेवंश्रियासह केसरेपूजनंकार्यंदेवतानांयथाक्रमम् यासांतासांतुवक्ष्यामितवनामानिभार्गव सुभद्रांनामदेवींतुपूर्वे
पूजनीयस्ततोब्रह्मासुरभिस्तदनंतरम् ततःसूर्यस्ततोधेनुर्बहुरूपाद्विजोत्तम ततस्तुपृथिवींदेवींततोनंतंतुपूजयेत् ततःस्वंविश्वरूपा
नंतरम् ततःसिद्धिंततोऋद्धिंततःशांतिंसमर्चयेत् गोहिनीनामदिग्धेनुस्ततःपूज्याद्विजोत्तम ततश्चंद्रमसंदेवंमहादेववृषंततः महादेवंतत
[illegible]देवताःप्रोक्ताःकेसरेष्वेवषोडश पत्रेषुपूजनीयास्तुदिक्पालास्तुयथादिशम् गंधमाल्यादिवस्त्रंचधूपदीपान्नसंपदः प्रत्येकं

र्जः पूर्णकुंभांश्च सर्वासां प्रत्येकं विनिवेदयेत् भक्तश्चगीतवस्त्राणि वर्धमानैः स्तनंदुलैः सहिरण्यैर्यथाशक्तिततोहोमं
वेदिंकृत्वायथाशास्त्रंसमिध्यचहुताशनं एकैकांदेवतांराम समुद्दिश्ययथाविधि चतुर्थ्यंतेननाम्नातुधर्मज्ञोजुहुयात्क्रमात् ततोरक्षो
याद्गौरसर्षपान् ततःसमापयेद्विद्वानग्निकर्मयथाविधि स्वर्णंचतथाकांस्यंधेनुंवस्त्रयुगंतथा कर्त्रादेयमुपद्रष्ट्रेवस्त्रयुग्मंशुभंतथा
मायंब्राह्मणांश्चान्नभोजयेत् स्वस्तिवाच्यंततःपश्चादन्नमादायवैद्विजः रक्षोहणंतथामंत्रैःकुर्युस्तेउक्षणंगवां गवांचपूजाकर्तव्यागं
कर्तव्याश्चतथावत्सायथाकामंद्विजोत्तम शांतिकर्मगवामेतत्सर्वोत्पातप्रशांतये इतिगोशांतिः अथकाकमैथुनशांतिः श्वेतकाकमैथुन
वहं काकोमैथुनयुक्तश्चेच्छ्वेतःसयदिदृश्यत इति हेमाद्रौगर्गोक्तेः नारदसंहितायाम् दिवावायदिवारात्रौयःपश्येत्काकमैथुनं सनरोमृत्यु
वास्थाननाशनं तद्दोषशमनायेत्थंशांतिकर्मसमाचरेत् गृहस्येशानभागेतुहोमस्थानंप्रकल्पयेत् स्वगृह्योक्तविधानेनतत्रस्थाप्यहुताशनं
दन्नाज्यैर्हुनेदष्टोत्तरंशतं प्रतिमंत्रंत्र्यंबकेनअपमृत्युद्वयेनच व्याहृतिभिर्व्रीहितिलैर्जपाद्यंतंप्रकल्पयेत् पूर्णाहुतिंचजुहुयात्कर्ताशुचिरलंकृतः
गौरीप्यखुरांकृष्णांधेनुंपयस्विनीम् वस्त्रालंकारसहितांनिष्कद्वादशसंयुताम् नदर्द्देननदर्द्देननदार्द्धार्द्देनवायुताम् यथावित्तानुसारेणतन्न्यूनाधि
त्मना आचार्यायश्रोत्रियायतांगांदद्यात्कुटुंबिने ब्राह्मणेभ्योविशिष्टेभ्योयथाशक्त्याचदक्षिणाम् ब्राह्मणान्भोजयेत्पश्चात्स्वस्तिवाचनपूर्वकं एवंय
रुतेसम्यक्सतद्दोषात्प्रमुच्यते अद्भुतसारेगर्गः काकस्यमैथुनंपश्येत्काकःशिरसिचेद्विशेत् शिरस्युरसिवाकुर्यात्सद्यःघातंनरेवैस्तया विदारणं

रुतेशयानंचस्पृशेद्यदि तदावदेत्तुमरणंमहारिष्टमथापिवा महारात्रेयथाकाकोवासतेहेतुनाविना तद्गृहारिष्टमाचष्टेग्रामारिष्टमथापिवा शांतिंतत्र
वीतविधानेनयथोदितां उद्दिश्यारिष्टशमनंकुर्यात्संकल्पपूर्वकं मुदितः शक्यैवोदेशेरत्निमात्रेस्थंडिलेग्निंनिधायच तदीशानेचाष्टदलेकलशोपरिशक्तितः
ण्यनिर्मितंत्विंद्रंलोकपालसमन्वितं पूजयित्वास्वशाखोक्तविधिनाश्रपयेच्चरुं कृत्वाज्यभागपर्यंतंजुहुयात्क्रमशोहविः पालाशीःसमिधोव्रीहीं
माज्यमितिक्रमात् अष्टोत्तरसहस्रंतुशतमष्टोत्तरंतुवा यतइंद्रेतिमंत्रेणलोकपालेभ्यएवच शक्त्याहुत्वास्वशाखोक्तप्रायश्चित्ताहुतीर्हुनेत् लो
लिंदत्वाइंद्राग्नेचरुशेषतः वायसेभ्योबलिंदद्याद्देवंवारुणमंत्रतः पूर्णाहुतिंततोदत्वाआचार्यंपूजयेत्ततः कुंभोदकेनाभिषेकोयजमानस्यविस्त
चार्यायेंद्रप्रतिमांदद्यात्सोपस्करांततः शक्त्याचभूयसींदद्याद्द्विजानांभोजनंदिशेत् शतंतदर्धमर्धंवाशक्त्यभावेदशापिवा सर्वशांतिंप
याच्चद्विजाशिषः एवंकृतेभवेच्छांतिःकाकारिष्टविनाशिनी मानवसंहितायां अथातःसंप्रवक्ष्यामिवायसःप्रविशेद्गृहं प्रवेशद्वारतोग
वर्जयेत् द्वारांतरेयदागच्छेत्षण्मासांस्तद्विवर्जयेत् देवालयंविशेच्चैवशीघ्रंमृत्युकरोभवेत् देवालयेनृपाणांतुग्रामनाशोभविष्यति गृ
गृहाशेषक्षयंकरः श्वानमार्जारतोगच्छेद्वायसःप्रविशेद्गृहं गृहस्थमरणंविद्यात्सर्वनाशोगृहेभवेत् एतेषांदोषजातानांशांतिंवक्ष्ये
वेशस्थानदेशेतुदक्षिणेवागृहात्ततः गोमयेनोपलिप्तेचस्थंडिलेसमलंकृते आचार्यंवरयेत्पश्चाद्ब्राह्मणंवेदपारगं व्रीहिंद्र. गेचस्थूलस्थूलक्ष्णं
[illegible]युक्तंपंचगव्यसमन्वितम् पंचरत्नसमायुक्तंपूरयेत्तीर्थवारिणा तस्योपरिन्यसेत्पात्रंकाकरूपंशचीपतिं कर्षमात्रस्तुवर्णेन प

...ा पूजयेत्पश्चाद्वस्त्रयुग्मंनिवेदयेत् यतइंद्रेतिमंत्रेणअर्चयित्वातुदैववित् इंद्राग्नीशानपर्यंतमर्चयेल्लोकपान्क्रमात् कुं...
त्रणंकुर्याच्छ्रीरुद्रंचस्पृशन्जपेत् स्वगृह्योक्तेनविधिनाहोमकर्मसमाचरेत् यतइंद्रेतिमंत्राभ्यांसमिदाज्यचरून्हुनेत् अष्टोत्तरसहस्रंवा...
तुवा त्र्यंबकेनचमंत्रेणतिलानष्टशतंहुनेत् इदंविष्णुस्तुमंत्रेणलाजहोमंसमाचरेत् उपहोमंततःकृत्वामहाव्याहृतिभिर्हुनेत् ततःस्वि...
मशेषंसमापयेत् संपातैरभिषिक्तःरक्तगोयुग्मंदक्षिणांदिशेत् आज्यावलोकनंकृत्वामहाशांतिंपठेत्ततः इतिवायसशांतिः अथपल्लि...
वसिष्ठसंहितायाम् कुड्यगेमस्तकाद्यंगेपतितेफलमुच्यते मस्तकेराज्यलाभःस्याद्भालेकर्णेचभूषणम् नेत्रयोर्मित्रलाभःस्यात्सुग...
रि वक्त्रेस्वभोजनंकंठेस्त्रीलाभःस्कंधयोर्जयः अंसेतेजोविवृद्धिःस्यादर्थवृद्धिःकरद्वये वक्षःस्थलेतुसौभाग्यंहृदिप्रीतिविवर्द्धनम् पु...
क्षोस्यान्नाभौकीर्तिविवर्द्धनम् अर्थलाभस्तुपृष्ठेस्यात्पार्श्वयोःसुहृदागमः कटिस्थानेवस्त्रलाभोगुह्यस्थानेसमागमः गुददेशेविनाशो...
जान्वोश्चवाहनम् जंघयोःपादयोश्चैवसदागमनमादिशेत् पादतश्चोर्ध्वगमनंकुर्यादामस्तकाद्यदि गात्रेप्रदक्षिणेचापिराज्यलाभोभवेत्तदा
स्तकात्पादपर्यंतंयदिगच्छेदधोपिवा भवेयुश्चनदानस्यकुटुंबकलहामयाः सरटीपतनादेवसचैलंस्नानमाचरेत् नारदसंहितायाम् पल्याःप्र...
तनेचैवसरठस्यप्ररोहणे शुभाशुभंविजानीयात्तत्तत्स्थानविशेषतः पल्याःप्रपतनेपूर्वैःफलमुक्तंशुभाशुभम् शीर्षेराज्यश्रियोवाप्तिर्भालेत्वैश्व...
वर्धनम् सव्येभुजेजयःप्रोक्तोह्यपसव्येमहद्भयम् कुक्षौदक्षिणभागेतुधनलाभस्तथैवच वामकुक्षौतुनिधनंगदितंपूर्वसूरिभिः सव्यहस्तेमि...

लाभोवामहस्तेतुनिःस्वता उदरेसव्यभागेतुसुपुत्रावाप्तिरुच्यते वामभागेमहारोगःकक्ष्यांसव्येमहद्यशः वामकक्ष्यांतुनिधनंमुनिभिस्तत्वदर्शिभिः

जान्वोरेवंविजानीयात्सव्यपादेशुभावहम् वामपादेतुगमनंस्त्रीणांव्यक्तंफलंवदेत् फलंप्ररोहणेचैवसरठस्यप्रचारतः सर्वांगेष्वशुभंविंद्यात्छां

कुर्यात्स्वशक्तितः शुभस्थानेशुभावाप्तिरशुभेदोषशांतये तत्स्वरूपंसुवर्णेन रुद्ररूपंतथैवच मृत्युंजयेनमंत्रेणवस्त्रादिभिरथार्चयेत्

ग्निंतत्रप्रतिष्ठाप्य जुहुयात्तिलपायसैः आचार्योवारुणैःसूक्तैःकुर्यात्तत्राभिषेचनम् आज्यावलोकनंकृत्वाशक्त्याब्राह्मणभोजनम् गणे

क्षेत्रपालार्कदुर्गाक्षोण्यंगदेवताः तासांप्रीत्यैजपःकार्यःशेषंपूर्ववदाचरेत् ऋत्विग्भ्योदक्षिणांदद्यात्षोडशेभ्यःस्वशक्तितः इ

रभद्दृष्कृतेशांतिसारेपल्लीसरठशांतिः अथकपोतशांतिः तत्रैव आरोहेत्तुगृहंयस्यकपोतोवाप्रवेशयेत् स्थानहानिर्भवेत्तस्यय

परा दोषायधनिनांगेहेदरिद्राणांशिवायच तच्छांतिस्तुप्रकर्तव्याजपहोमविधानतः ब्राह्मणान्वरयेत्तत्रस्वस्तिवाचनपूर्वकम् षो

ष्टेवाश्रौतस्मार्तक्रियापरान् देवाःकपोतइत्यादिऋग्भिःस्यात्संचभिर्जपः कुंडंकृत्वाप्रयत्नेनस्वगृह्योक्तविधानतः ईशान्यां

मुखांतेष्टोत्तरशतं प्रत्येकंसमिदाज्यान्नैः प्रतिप्रणवपूर्वकम् यतइंद्रभयामहेस्वस्तिदेतिव्यंबकैः त्रिभिर्मंत्रैश्चजुहुयात्तिल

सह जपादींश्चततोभक्त्याकर्तापूर्णाहुतिंस्वयम् विप्रेभ्योदक्षिणांदद्याद्धोमशांतिंततोजपेत् ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीत

ष्यातस्माद्दोषात्प्रमुच्यते पिंगलस्यस्वरेप्येवंमधुवल्मीकयोरपि संपूर्णमंदिरेहानिःशून्यसद्मनिमंगलम् प्राकारेषु

प्रासादाद्येषुवीथिषु तत्फलंयामपस्यैवसीम्निसीमाधिपस्यच शांतिकर्माखिलंकार्यंपूर्वोक्तेनक्रमेणतु इतिकपोतपिंगलादिशांतिः
शांतिः शौनकोहंप्रवक्ष्यामिकृत्याशांतिंद्विजन्मनाम् कुर्यात्स्वजन्मनक्षत्रेमासेमासेसमाहितः स्नातोनववस्त्रमाच्छाद्यसमलंकृ
ग्नेः स्वस्तिवाच्योच्चैराशीर्भिर्वेदपारगैः संस्कृतेप्रदेशेपरेणानवलोकिते अथाज्यभागपर्यंतंयज्ञतंत्रंप्रकल्पयेत् उपलेपनप्र
तायसंचरुम् यांकल्पयतिसूक्तेनऋचोद्वारिशनैःपुनः इंद्रस्त्वेतिसूक्तेनजुहुयाच्चघृताहुतिम् ततःस्विष्टकृत्प्रभृतिहोमशेषंस
त्यर्थंदक्षिणादेया ब्राह्मणांश्चैवभोजयेत् जपेद्वैतानिसूक्तानियतात्मासमाहितः प्रत्यांगिरसकल्पेनसद्यस्तांप्रतिबाधते इति
थाशनिदग्धगृहादिशांतिः वेश्मक्षेत्रादिदग्धेषुवैद्युतेनाग्निनायदि तेषांशांतिंप्रवक्ष्यामिशौनकोहंद्विजन्मनां तस्मिन्देशेजानुमा
नतु शीपालमवकांचैवनिधायस्वस्तिवाचयेत् कर्तास्यपश्चिमेदेशेहोमंकुर्याद्विचक्षणः इध्माधानादिपर्यंतंयज्ञतंत्रंप्रकल्पये
सर्वमिध्माधानाज्यभागयोः आज्याहुतीःशंवतीभिर्जुहुयादग्निमग्रतः समलथेतिसूक्तेनजुहुयाच्चचरुंततः ततःस्विष्टकृत्प्रभृति
पयेत् अग्नेरुत्तरतःस्विष्टात्स्वस्त्यात्रेयंजपेत्ततः ब्राह्मणान्भोजयेत्तत्रयथाशक्तिचदक्षिणा तदग्निदग्धवपुषेप्रदद्याद्ब्राह्मणायच
सर्वेषुहिरण्यंदक्षिणाभवेत् इत्यशनिदग्धगृहादिशांतिः अथाद्भुतशांतयः उत्पातउपसर्गअद्भुतंचेतिपर्यायाः तल्लक्षणंवसिष्ठसंहितायाम्
त्वंप्रकृतेर्यत्तदसावुत्पातसंज्ञकः अधर्मतस्त्वसत्याच्चनास्तिक्यादनिलोभतः अनाचारान्नृणांनित्यमुपसर्गःप्रजायते तद्भेदस्त्रैव दिव्यांत

क्षितिजाविकाराघोररूपिणः ग्रहर्क्षजाः केतवश्च उत्पातादिव्यसंज्ञकाः निर्घातापरिवेषोल्कापुरंदरधनुर्ध्वजाः एवमाद्यामहोत्पाता अंतरि
यास्मृताः उत्पद्यतेक्षितौयच्चस्थावरंवाथजंगमम् तदेकदेशिकंभौमउत्पातःपरिकीर्तितः भौमाःस्युस्तुच्छफलदा आंतरिक्षास्तुमध्यमाः सं
दादिव्यावर्षादर्धात्तदर्धतः अथकेतुफलंवसिष्ठसंहितायाम् केतोरुदयास्तमयंज्ञातुंगणितान्नशक्यतेयस्मात् दिव्यांतरिक्षभौमास्
विधाश्चकेतवोजगति १ एकोत्तरशतभेदाद्दृश्यंतेवासहस्रभेदास्ते औत्पादिकरूपत्वाद्भवंतिबहवस्तथैकोवा २ दिविभऋक्षग्रहजास्ते
नवोमहाफलदाः परिवेषेंद्रधनुरुल्कागंधर्वनगराणिनिर्घाताः ३ गगनविकारजमेतन्मध्यमफलदंतथांतरिक्षंच भूमिभवाभौमा
वस्तुसंभवायेच ४ तेधमफलदास्तेषांकथ्ययामिफलानिरूपाणि वर्षैर्मासैःपक्षैःक्रमशःपरिपाकमुपयांति ५ स्निग्धःप्रसन्नरूपः शु
इवत्सौम्यः उदयास्तमयेत्वेवंसुभिक्षसौख्यावहःकेतुः ६ धूमनिभोधूमाख्यःकेतुर्दोषप्रदोभवति इंद्रशरासनरूपःस्थूलनिभो
कृ ७ बहुभिःशिखिभिरतुलाविद्युन्मणिहारहेमनिभाः अपरेंद्रदिशोर्दिश्यान्महाहवंतद्दिगीशानाम् ८ शुकमुखबंधुनिभावन्हि
न्निभारूक्षाः दृश्यंतेयद्यनलदिशितावंतस्तेपिशिखिभयदाः ९ मृत्युस्कृतावक्रशिखाःकृष्णारूक्षाःप्रहरणाकाराः दृश्यंतेयाम्यायां
यप्रदास्तेपि १० क्षितिननयाद्वात्रिंशद्दर्पणसदृशाःसरश्मयोविशिखाः क्षुद्भयदाःसशिरस्कायमतनयामृत्युदाश्चशैलनिभा; ११ शशित
सुमनिभाःकुंदेंदुक्षीररजतनिभाः उत्तरभागेशिखिनोजंतूनांतेसुभिक्षकराः १२ त्रिशिखीत्रिवर्णयुक्तोब्रह्मसुतोब्रह्मदंडनिभः अनियतदि

शांतिकरोब्रह्मदंडाख्यः १३ शनितनयास्तारास्थाः शुक्लाऋजवश्चषट्संख्याः दृश्यंतेद्वित्रिदिनैः शुभदामासेश्वरुग्भयदाः १४ जीवसुतावि-
शुक्लास्ताराश्रिताःस्निग्धाः याम्यायांदिशिसंस्थाबहवस्तेत्रापदाःसततम् १५ बुधतनयाश्चोराख्याःशुक्लाःसूक्ष्मायथेष्टदिक्प्रभवाः आमयप्र
सततंजंतूनांपंचपंचाशत् १६ कुजतनयाःकैकेयाःक्षतजानलसन्निभास्त्रिशूलधराः याम्यायांदिशिसंस्थाःक्षुद्भयदाःषष्टिसंख्याकाः १७ ता
मकसंज्ञाराहुसुताःसूर्यमंडलेदृष्टाः तेषांतन्निखिलफलंसम्यक्कथितंचसूर्यवारेपि १८ अग्निसुतास्त्वाग्नेय्यांविंशत्यधिकाश्चशतसंख्याकाः
सदृशाभानुवन्हिभयप्रदास्तेपि १९ अरुणाख्याःश्यामनिभाःशुक्रसुताविविधरूपसंकीर्णाः शस्त्रक्षुद्भयदास्तेसमोत्तरसप्ततिश्चसंख्याका
ज्ञाश्चाष्टौतारासदृशाःप्रजापतेस्तनयाः द्वाचत्वारिंशोत्तरशताधिकाःपापदाविधातृसुताः २१ वरुणप्रवार्ककाख्याद्वात्रिंशद्वंशगुल्मद्युति
शिवत्प्रभासमेताराज्ञोन्यत्वंप्रकुर्वंति २२ कालप्रवाःषण्णवतिसंख्यास्तेषांकबंधनिभाः तन्नामानःशिखिनःपुंड्रामयभीतिदाजगतः २३
राकारादशदिक्षुसमुद्भवाःशिखिनः एवंसहस्रभेदाःपापाश्चैषांविशेषमभिधास्ये २४ पश्चिमदिशिसंभूतश्चोत्तरनम्रश्चसौम्यकेतुःसः कुरुते
मतुलंसितवर्णोसौमहास्निग्धः २५ दक्षिणनम्रःप्राच्यांतथाविधोयाम्यकेतुःसः रूक्षःक्षुद्भयदायीमरकभयंवाकरोत्येव २६ धूमनिभोयाम्यां
पालकेतुर्बृहत्तनुःस्निग्धः दिक्षुविदिक्षुप्रभवःक्षुन्मरकावृष्टिरोगकरः २७ प्राच्यांदिशिसंभूतःप्रदक्षिणंभ्रमतिचक्रवद्रूक्षः सचचक्रकेतुरनिश-
पालकेतोश्चतुल्यफलः २८ पश्चिमतःसंभूतोयाम्यांदिशिभ्रमतिचप्रदक्षिण्यम् धूमनिभोविषमाख्यःकेतुर्भूभारमपनयति २९ कतिपयदिवसां

त्वागमननिवृत्तिकरोधूमनिभः नरपतिकलहाज्जगतः करोतिविलयंसचक्रकाराख्यः ३० गगनत्रिभागदीर्घः श्यामनिभोसौमहासटाकारः क्रू
क्रगतिंकुरुतेक्रमशोजगतस्त्रिभागहरः ३१ गतिरहितोध्रुवकेतुः प्रमाणवर्णाकृतिर्नभवेत् ग्रहनक्षत्रोपगतेदृष्टोनैवाशुभप्रदः केतुः ३२ उपक
षुचराज्ञांस्करगृहतरुपर्वतेषुसदनेषु दर्शनमुपैतिपतितंविनाशिनामेवनियमेन ३३ कुमुदनिभः कुमुदाख्योदिवसैःषड्भिस्तुपश्चिमेदृष्टः प्रा
दिशियदिवासुभिक्षमतुलंकरोत्येव ३४ तारोपरिमणिकेतुर्याम्यायांदिशिसकृद्दृष्टः उदयास्तमयसमयेशुभदोसौक्षीरधारेव ३५ जलधारे
नतयाशिखयापरेणदृष्टःसः जलकेतुर्जलसदृशः सुभिक्षकरस्तुसर्वजंतूनाम् ३६ हरिलांगूलनिभोभवकेतुः क्रकचसन्निभोवापि
कुरुतेसर्पाकारस्तकसर्वदाभवति ३७ अपरोपिपद्मकेतुः पद्मनिभः पद्मगर्भसंकाशः क्षेमकरोनृपतीनांसुभिक्षदः सर्वजंतूनाम् ३८
श्यंप्रादक्षिण्येनदीप्तिमान्शुक्रः शुभदोव्यत्ययकेतुस्त्वतुलामयभीतिरीतिकरः ३९ आक्रम्यगगनमखिलंसंवर्ताख्यासधूमनिभः
रोवासकेतुरसकृद्भयप्रदोजगतः ४० शुभदाः शुक्लनिभायेकृष्णास्त्वशुभप्रदाजगतः केतूनांफलमुक्त्वावक्ष्येदस्रादिभेषुजातानाम्
श्विन्यांयदिकेतुर्जातस्तदश्वजीविनांहन्यात् याम्येम्लेंच्छाधिपतिंबहुलायांकलिंगकाधिपतिम् ४२ रोहिण्यामतुलबलंनिहंतिकेतुश्चशूरसेन
औशीनरमुख्यपतीन्सौम्येरौद्रेचजलजंतून् ४३ अश्मकदेशाधिपतिंत्वादित्येपुष्यभेचमगधपतिम् आर्याधिपतिंसार्पेपांड्याधिपतिंचपित्
ष्ण्ये ४४ भाग्यर्क्षेतूज्जयिनंचोत्तरभेदंडनायकांस्त्वखिलान् हस्तर्क्षेधनिकवरांश्चित्रायांकुरुभवांस्त्वखिलान् ४५ कांबोजनृपतिमुख्यंमभंज

केतुरपि इक्ष्वाकुवंशनाशंह्रिदैवभेचगौडेशम् ४६ ज्येष्ठायांयदिजातःसहन्यूतेसर्वमंडलाधीशम् मूलेभद्राधिपतिंजलदैवेकलिंगदेशपतिम्
गूंजरिकायेदेशास्तान्हन्याद्वैश्वधिष्ण्यजःसोपि केकयनाथंहन्याच्छ्रवणर्क्षेवसुभवोखिलान्द्रविडान् ४८ नैमिषनृपतिंहन्याच्छतभिषजस्
घ्रिजश्चपांचालान् आहिर्बुध्न्यर्क्षभवःसंकरिकान्किरातकोणभवान् ४९ पौष्णार्क्षभवःकेतुर्द्विजसज्जनधर्ममार्गस्थान् अभिजिन्नक्षत्रप
दिशंचनिशिचरांश्चापि ५० येकेनवश्चाश्विमुखर्क्षजातास्ताराग्रहादिष्वपिसंभवाश्च कुर्वंतुनेतीक्ष्णफलंजनानामन्येपिसामान्यफल
५१ उल्कादिलक्षणंतत्फलंचनारदीये स्वर्गच्युतानांरूपाणियान्युल्कास्तानिवैभुवि धिष्ण्योविद्युदशनिताराःपंचविधाःस्मृताः पीडा
मायुखरगोगजदंष्ट्रिकाः कपिगोधाधूमनिभाविविधाःपापदानृणाम् उदयास्तमयेर्केंद्वोःपतितोल्काशुभप्रदा सितरक्तापीतसित
द्विजातिनः राजराष्ट्रविनाशायप्रासादप्रतिमासुच गृहेषुस्वामिनांपीडानृपाणांपर्वतेषुच दिक्षुनत्तद्दिगीशानांकर्षकाणांस्थलेषुच ग
नांपीडाशिल्पिकानांजलेषुच वर्तुलोल्कापुरंहंतिछत्राकारापुरोहितम् वंशगुल्मलताकाराराष्ट्रविद्राविणीतथा इतिकेतुफलम् अथपरिवेष
वायुनिहताउच्छ्रितामंडलीकृताः नानावर्णाकृतयःखेपरिवेषाःशशीनयोः मुहुर्मुहुःप्रलीयंतेनसंपूर्णफलप्रदाः अनेकवृत्तवर्णश्चपरिवेषा
तत्कृत् द्विमंडलश्चमूनाथंनृपप्रोथत्रिमंडलः द्वौग्रहौपरिवेषस्थौक्षितीशकलहप्रदौ कुर्वंतिकलहानर्थंपरिवेषगतास्त्रयः चत्वारःपरिवेषस्थान्नृ
स्यमरणप्रदाः परिवेषगताःपंचजगत्प्रलयदाग्रहाः नृपहानिःकुजादीनांपरिवेषेपृथक्पृथक् प्रावृड्तौतुशारदिपरिवेषोजलप्रदः प्रायेणान्येषुक्ष

षुतदुक्तफलदायिनः अन्यत्रापि रविशशिपरिवेषे पूर्वयामे च पीडा रविशशिपरिवेषे मध्यमे चातिवृष्टिः रविशशिपरिवेषे धान्यनाशस्तृतीये रविश
परिवेषे राज्यनाशश्चतुर्थे इतिपरिवेषः अथेंद्रधनुः नानावर्णांशवो भानोः साभ्रवायुनिघट्टिताः यद्व्योम्नि चैव संस्थानमिंद्रचापं प्रदृश्यते अ
वाशेषनागेंद्रदीर्घनिश्वाससंभवम् विदिक्षुजं दिक्षुजं च तद्दिक्भूपविनाशनम् अवृष्टौ वृष्टिदं त्वैंद्र्यां दिशि वृष्ट्यामवृष्टिदम् अवनीगाढमच्छिन्नं
तिकूलं धनुर्द्वयम् नृपां न कुर्याद्यदि भवेदानुकूले तु तच्छुभम् इतींद्रधनुः अथ निर्घातः वायुना निहतो वायुर्गगनात्पतति क्षितौ नदादी
नः स निर्घातोतिदोषकृत् इतिनिर्घातः अथ रजः सितेन रजसाच्छिन्नाद्दिग्ग्रामवनपर्वताः यदा तदा भवंत्येते निधनं यांति भूमिपाः
यस्यां वै तस्यां दिशि विनाशनम् ऋतावन्यत्र शिशिरात्संपूर्णफलदं रजः इतिरजः अथ भूकंपः भूभारखिन्ननागेंद्रशेषविश्रामसंभवः
पि जगतामशुभाय भवेत्सदा यामक्रमेण भूकंपा द्विजादीनामनिष्टदाः अनिष्टदाः क्षितीशानां संध्ययोरुभयोरपि प्रायेण निखिलोत्पात
निष्टदाः षड्भिर्मासैश्च भूकंपो द्वाभ्यां दाहः फलप्रदः अनुक्ताः पंचभिर्मासैस्तदानीं फलदं रजः इतिभूकंपः अथ ग्रहयुद्धम् अद्भुतसागरे ग
रोधनं चैव रश्मिरोधं तथैव च अपसव्यं ग्रहाणां च चतुर्धा युद्धमुच्यते इदं च भौमादीनामेव न सूर्यचंद्रयोः ताराग्रहाणां पंचानां युद्धान्युक्तानि
इत्युपसंहारात् पराजयलक्षणं च तत्रैव ग्रहो ग्रहं समागम्य श्यामीभवति यो भृशम् हानिं प्राप्नोति वक्तव्यं स्यंदते च मुहुर्मुहुः तत्फलं विस्तरभीते
ते अत्र सामान्यशांतिरेव विशेषानुक्तेः इतिग्रहयुद्धम् अथ प्रतिसूर्यः तत्रैव मयूरचित्रे उदीयमानः सूर्यो वै दृश्यते प्रतिरूपकः त्रीण्यब्दानि प

शोमासार्द्धेननसंशयः अत्रापिसाधारणशांतिः इतिप्रतिसूर्यः अथरश्मिदंडः वाराहसंहितायाम् रविकिरणजलदमरुतांसंघातोदंड
दंडः सविदिङ्नुखोनृपाणामशुभोदिक्षुद्विजानांच इतिरश्मिदंडः अथदिग्दाहः अद्भुतसागरेबार्हस्पत्ये यदास्तमितआदित्येवन्हिज्वाला
ने दिशांदाहंतुतंविंद्यादितिभार्गवभाषितम् नारदसंहितायाम् दिग्दाहःपीतवर्णश्चेत्क्षितीशानांभयप्रदः इतिदिग्दाहः अथछाया तत्रै
विरजस्केरवौनैव यदाछायानदृश्यते दृश्यतेतुप्रतीपावातदादेशभयंवदेत् अत्रमासिकःफलपाकः अनुक्तफलकालत्वात् इतिछा
घगर्भोपघातः तत्रैववटकनिकायाम् गर्भोपघातलिंगान्युल्काशनिभूमिकंपनिर्घातः ग्रहयुद्धराहुशशिनांभ्रंशपुरोवारुजोवापि त
हितायाम् रुधिरादिवृष्टिवैकृतमथवेंद्रधनुर्निदर्शनंराहोः इत्युपपातैरेतैर्विविधैश्चान्यैर्हतोगर्भः इतिमेघगर्भोपघातः अथाद्भुतपाक
तसागरेबृहत्पाराशरः तत्रोत्पातफलंदिव्यंपूर्णेवर्षेविपच्यते आंतरिक्षंतथाभौमंमासैःषड्भिस्तथर्त्तुभिः निर्घातस्तुत्रिभिर्मासैर्गंधर्व
अग्निनासप्तरात्रेणमासेनोल्काविपच्यते पुरचैत्यादिभंगेषुपुरसंक्रमणेषुच नरेंद्रध्वजभंगेषुफलंमासाद्विपच्यते शांतिःस्वरूपजातानांपा
सिकोभवेत् अरिष्टंपच्यतेषट्सुमासेषुफलदंत्रिषु अतिहर्षातिशोकश्चसद्यएवविपच्यते कीटमूषकसर्पाणांमक्षिकादिषुयत्फलम् पच्यतेतं।
सेनमधुसप्तस्रुपच्यते हयानांहस्तिनांचैवशकुनंचशुनस्तथा सद्यस्त्र्यहाद्वानियतमुलूकस्यतथैवच विदेहवाक्संश्रवणंदर्शनंयक्षरक्षसाम्
भूनांविकृतंयच्चषष्ठेमासिविपच्यते मांसतैलविकारेषुदेहांगस्यंदनेषुच वस्त्रजातिविकारेषुफलंस्यात्सप्तमेहनि चित्रकर्मणिमासाभ्यांशयने

मासिकम् वल्मीकेषट्सुमासेषुक्षयेवृद्धेतथात्रिषु जयोच्छ्रायेषुभग्नेषुयज्ञकर्मणिवैकृते सोमध्वजविकारेच्चविकाराःसप्तमासिकाः तंतुबीज
कारेषुराज्ञःशस्त्रेवजृंभणे पद्मोत्पलफलादीनांफलंषाण्मासिकंभवेत् विनाशेनिष्कलंतेषांपाककालेनिवर्त्तते तत्रैवगर्गः पक्षाद्विपाकः सूर्य
पाकःसोमस्यमासिकः मासद्वयेस्मृतोराहोर्विपाकोनात्रसंशयः त्रिभिर्मासैर्विपाकस्तुनियतंधूमकेतवः संवत्सरंविपाकोतुज्ञेयौसूर्यबृह
षाण्मासिकश्चोशनसःसूर्यजस्यतुपंचभिः त्रिभिर्मासैस्तुभौमस्यउल्कापातस्तुमासिकः अष्टभिर्भूमिकंपस्तुनिर्घातःपच्यतेत्रिभि
वंपुष्पफलंषड्भिर्मासैर्विपच्यते पक्षिकीटपतंगानांदशाहात्फलमादिशेत् घृततैलवसावर्षेसद्यःफलमुदाहृतं अरिष्टंषट्सुमासेषुपच
हिरण्यविक्रियायांतुफलंमासाद्विपच्यते कलहार्थविपर्यासउत्सवक्रिययासह अचलानांचचलनेषण्मासात्फलमादिशेत् कीटमूषक
क्षिकानांतथैवच दर्शनेत्वतिमात्रेणफलंत्रैमासिकंभवेत् रात्राविंद्रधनुर्दृष्ट्वाराज्ञःशीलविपर्ययं वानराणांनराणांचतथैवगजवाजि
दिव्यशब्दानांफलंमासाद्विपच्यते गृध्रगोमायुसिंहानांफलंमासाद्विपच्यते बिडालनकुलानांचवराहव्याघ्रयोस्तथा श्रुत्वांतरिक्षेशब्दंतुफ
च्यते मात्स्येविष्णुधर्मोत्तरेच अद्भुतेतुसमुत्पन्नेयदिवृष्टिःशिवाभवेत् सप्ताहाभ्यंतरेज्ञेयमद्भुतंनिष्फलंभवेत् शिवानिर्विकारा इतिअ
लः अथाद्भुतफलस्थानानि अद्भुतसागरेपाराशरः राज्ञःशरीरेलोकेचपुरदारपुरोहिते पाकआयातिपुत्रेषुतथाकोशेचवाहने तत्रैवगर्गः
पदेकोशेवाहनेचपुरोहिते पुत्रेस्वामिनिभृत्येच पच्यतेदैवमष्टधा वसिष्ठसंहितायाम् भौमंशांत्याशमंयातिमार्दवंत्वंतरिक्षजं दिव्यंहेमान्न

दानेस्तत्कोटिहोमतः महोपहाराद्रुद्रस्यगोदोहात्तत्पुरःसरं अलंकृतेक्षितिनिर्मलेयावल्क्षारप्लुवंभवेत् अपिदिव्यंशमंयातिकिंपुनस्त्वितरद्भयं
कारीतत्रैव अकृत्वाशांतिकंराजादुःखांभोधौनिमज्जति अश्वरोमंथाष्टवर्गादिरजोदर्शनादौतुतत्स्वामिनोधिकारः केचित्तत्रापिराज्ञोधि
रुः अथवासर्वाद्भुतशांतिषुसर्वेषामधिकारः अद्भुतसागरे येत्वेषुशांतिंकुर्वंतिनितेयांतिपराभवं येतुनप्रतिकुर्वंतिक्रियामश्रद्धयान्वि
क्याद्वाविमोहाद्वाविनश्यंत्यचिरादितिगर्गोक्तेः अश्वादिकंचदत्वाशांतिःकार्या वृक्षोत्पातेछेदनमाह नारदः अकालेपुष्पिताद्वृक्षा
तायदि कार्यंतच्छेदनंतत्रततःशांतिर्मनीषिभिः अथोत्पातसाधारणशांतयः अथाद्भुतानांसर्वेषांशांतिंवक्ष्यामिशौनकः आश्चर्यमद्
णेनसमन्वितं दिव्यानिचांतरिक्षाणिभौमानीतित्रिधाभवेत् रश्मिहीनंरविंपश्येद्रवौछिद्रंचभेदनं नक्षत्रचंद्रसूर्याणांमहोल्कापतनं
विद्युतंपश्येन्नभमेघेचविद्युतम् अतिसूर्यंचतुर्दिक्षुपरिवेषंतथात्रयं त्रिकोणंचतुरस्रंवाविपरीताकृतिंतथा प्रतिचंद्रेतथारात्रौचंद्रस्याप्
श्चमृत्पांसुरक्तानांवर्षणंजलकाष्ठयोः अनग्निधूममाकाशेपतंतींदीपिकांतथा गंधर्वनगरंदृष्ट्वादिवानक्षत्रदर्शनं एवमादीनिदिव्यानिअं
तानिच अथान्यान्यंतरिक्षाणिह्यद्भुतानिनिबोधमे गगनंलोहितंपश्येत्पश्येद्वाकाकमैथुनं काकदुर्गंधिवद्गंधोयद्वाशिरसिजायते शिरस्युप
कस्ताडयेद्वाप्यकारणात् देवालयानिकंपंतेदृश्यंतेप्रतिरूपकम् कलशोविकलेत्किंचिन्नूध्वजप्रपतनंतथा भिंदंतेदेवताःसर्वाःस्विद्यंतेचाप्यका
न् उन्मीलंत्यपिरोदंतिनिमीलंतिहसंतिच गायंत्यकस्मान्नृत्यंतितिष्ठंतिनिजपीठतः पीठदेशेप्रजायंतेमधुच्छत्रंपिपीलिकाः रात्राविंद्रधनुर्दृष्ट्वा

वाश्वेतंचवायसम् एवमादीन्यसंख्यानिआकाशप्रभवानिच भूमेः कंपनभेदोचनिर्घातः कंपनंस्फुटम् पूयनंनटनंवापिज्वलंतंचनिरिंधनम् छ
कंमधुवल्मीकंगृहेयत्रप्रजायते तृणानिचैवदारूणिप्ररोहंतिगृहोत्तरे शुष्कवृक्षाः प्ररोहंतिनिक्षीयतेतैलभांडकम् जायंतेचोद्भिदः सर्वप्राणिनोबहुधा
ताः अरण्यस्थामृगाः सर्वेअतीताश्चाप्यकारणात् प्रविशंतिगृहेयत्रगृहमारोहयेद्यदि सर्वेमृगाश्चगावोवाअश्वोष्ट्रमहिषादयः निर्गच्छंतिगृह
त्सर्पोवैस्वयमेवहि मंडूकसर्पनकुलेर्मुखाग्नौप्रविशेद्यदि सौवीरभांडान्मंडूकोनिर्गच्छन्प्रविशेत्तथा तृणगुल्मलतावृक्षाविपरीतफलाअपि
गवृक्षादिकाष्ठगर्भेफलद्वयम् उद्यानस्थापितारंभादक्षिणाभिमुखेफले देवोद्यानेनरोद्याने विलीयंतेमधूनिच गवाश्वमहिषीभार्यायुग
गवानित्रीणिविप्रेभ्योदानंकुर्याद्विशेषतः मनुष्यादंतसहिताजायंतेपिनचांगकाः अजाश्वमहिषीगावः खरोष्ट्राद्याविशेषतः विरवुरायत्रज
गास्तथैवच हीनांगानिचसूयंते अधिकांगास्तथैवच स्थूलायांमुकुलंभार्यास्वस्तनंगोः पिबेद्यदि श्वानकोगृहमारोहेत्प्रविशेद्वाशिवापुरम्
पोतानांदृश्यतेमैथुनंयदि दृश्यतेमर्कटस्कंधोगोदुग्धेरुधिरंयदि एवमादीन्यसंख्यानिपार्थिवान्यद्भुतानिच कर्तुः श्रोतुश्चमंतुश्चद्रष्टुरादि
दृष्टुश्चसर्वेषामुत्पातानांफलंसमम् गृहोद्यानेस्थितोत्पातस्तद्गृहस्यैवबाधकम् होमकुंडेस्थितोत्पातेतत्कर्तुश्चैवबाधकम् त्रेताग्निकुंडजोत्पातेत
वबाधकम् सभातलेस्थितोत्पातंपश्चाद्द्वारेचसंस्थितम् गोनिवासस्थितोत्पातंतद्ग्रामस्यैवबाधकम् स्वयंभूस्थानजोत्पातंतद्राज्ञश्चैवबाधकम् तै
स्यैवराज्यस्यबाधकंपरिचक्षते गृहेपक्षिप्रवेशेचमृगश्चप्रविशेत्तथा तद्गृहान्निर्गतेसर्पेमासात्तत्प्रविशेन्नरः मासेतीतेततः पश्चाद्गृहशुद्धिंचका

...गृहान्प्रविशेन्मंदिरंततः एतेषांत्वफलंवक्ष्येस्कयुक्तंशास्त्रनोदितम् आत्मनोनिधनंयातिक्षिप्रमेवन संशयः वियोगःपुत्रपल-
त्नद्रव्यादिनाशनम् तद्ग्रामेचैवतद्देशेअनावृष्टिर्भविष्यति तत्स्थानचलनंवापिबंधनंशोकमाप्नुयात् एतेषांशमनार्थायहोमःकार्योद्विजाति-
स्मिन्नहनिकर्तव्यःशांतिहोमोयथाविधि तदैवमुख्यकालत्वाद्दिनशुद्धिमतःपरम् अद्भुताहःसमारभ्यतत्पक्षेहोममाचरेत् चंद्रानुकूल्येदिव-
समारभेत् अद्भुतेसतिदेशेचदक्षिणेवागृहोत्तरे दशद्वादशहस्तंवामंडपंकारयेच्छुभम् कुंडेवास्थंडिलेवापिगोमयेनसवारिणा उपलिप्
रंगमालिकमाचरेत् उत्तमेनवकुंभांश्चपंचकुंभांश्चमध्यमे द्विकुंभंतुकनिष्ठेवैजपकुंभांश्चकल्पयेत् होमस्यैशानदिग्भागेशांतिकुंभमथ
स्थापनार्थायकुंभमेकमथापरम् स्वर्णराजततांम्रैश्चकारयेन्मृन्मयेनवा स्कस्निग्धानिचकुंभानिअभिन्नान्यव्रणानिच धवलीकृतकुंभानि
तंतुभिः कुंभानिवेष्टयेत्पश्चान्नवशुक्लांबरैःशुभैः गंधपुष्पाक्षतैरत्नैःकुंभानिक्रमशोर्चयेत् पल्लवैश्छादयेच्चूतैर्यद्वाजंब्वादिकोमलैः प्रति
येद्ध्रीमाञ्ज्ञातरूपमयेनच माषविंशतिमानेनस्कवर्णेनोत्तमेनच अष्टमाषेणवाकुर्याच्चतुर्माषेणवातथा माषद्वयप्रमाणेनमासमात्रेणशक्तितः
र्निमित्तेसूर्यरूपमाकाशेवायुमूर्तिजम् भूनिमित्तेअग्निरूपंलक्षणेनैवकारयेत् तदभावेतुतन्मौल्यंनिधायाथप्रपूजयेत् आहूयमंत्रान्संपूज्यस्व-
स्तिवाचनपूर्वकम् आचार्यंवरयेत्पश्चाद्ब्राह्मणंवेदपारगम् सर्वावयवसंपूर्णंकुलीनंचकुटुंबिनम् आचारवंतंधर्मज्ञंसर्वलोकहितैषिणम् शीललक्ष-
णसंपूर्णंरूपौदार्यगुणान्वितम् सदासंतुष्टमनसंरागद्वेषविवर्जितम् उत्पातशांतावेतस्यांत्वमाचार्योभवेतिच एवंकृत्वातथाचार्यंब्राह्मणंचतथ

विधम् आचार्यवत्सदस्यंच सर्वज्ञंवरयेत्ततः ऋत्विजोवरयेत्पश्चात्षोडशाष्टौच भक्तिनः वित्तानुरूपंवरये द्वौवालक्षणलक्षितौ अन्यांश्च कर्मकार्यार्थं

वरयेद्ब्राह्मणोत्तमान् देवतास्थापनार्थाय होमस्यैशानदेशके पद्ममष्टदलंकुर्यादक्षतैर्व्रीहितंडुलैः कर्णिकाकेसरोपेतं सर्वशोभासमन्वितम् देवतास्था

पनंकुंभंपद्ममध्येनिधायच सजलौषधिसंयुक्तंवस्त्रगंधाद्यलंकृतम् वस्त्रंदेवासनार्थायकुंभवस्त्रेनिधायच सलिलौषधिसंयुक्तंकुंभंवस्त्रादिभिर्यजेत्

पन्वाधानाज्यभागांतंकुर्यात्तंत्रंयथाविधि होमंकुर्यात्ततःपश्चादाचार्योब्राह्मणैःसह सदस्योदेवतापूजांकुर्यान्मंत्रेणभक्तितः पंचामृतेनसंस्नाप्यस्थापये

ऽग्निसमंतिके छादयेद्देवतारूपंनवशुक्लांबरेणच उद्यन्नद्येतिमंत्रेणतस्मिन्वायुंप्रपूजयेत् यस्मैत्वंसुकृतेस्येन पूजयेज्जातवेदसम् रक्तगंधाक्षतैः

पोपहारकैः तांबूलंकल्पयेत्तस्मैस्नानवस्त्रादिभिर्यजेत् तन्मंत्रेणैवतंदेवंयजेदष्टोपचारकैः देवपूजोत्तरेकालेततःकुंभाभिमंत्रणम् ऋत्वि

वृत्याकुंभंस्पृष्ट्वाभिमंत्रयेत् अपनःशोशुचदघमष्टाभिश्चयथाक्रमम् यदंतियच्चदूरक इत्यृचांसप्तकंतथा यत्रब्रह्मापवमानेतिऋग्भिःष

मम् उद्वयंतमसस्पर्यादित्यलस्यरेतसः देवाःकपोतसूक्तेनकपोतादिप्रवेशनम् त्र्यंबकंजातवेदसेश्रीसूक्तेनाभिमंत्रयेत् उत्तमेचाष्टसाहस्रं

संख्यया अष्टाविंशतिसंख्यावातृतीयेतदनंतरम् पलाशीयैःसमिद्भिश्चघृताक्तैर्जुहुयादथ मृत्युंजयेनमंत्रेणहस्तेनाग्नौक्रमेणच तावत्

ज्यंजातवेदसइत्यृचा रक्तचंदनसंयुक्तंपायसंघृतसंयुतम् पायसंजुहुयादग्नौसमिदाज्यप्रमाणतः ऋगादौप्रणवंचोत्काःस्वाहाकारमृगंततः

...विंशतिभिर्हुनेत् कुंभाभिमंत्रणोक्तैश्चऋग्भिराभिश्चपायसम् शांत्यर्थंतिलहोमंच हुनेद्याहृतिभिस्त्रिभिः सौविष्टकृतमारभ्य

...मुद्रदूर्मिसूक्तेनहुनेत्पूर्णाहुतिंततः पश्चिमेवोत्तरेपूर्वमग्नेरीशानदेशके यजमानाभिषेकार्थमासनंचनिधायच दारपुत्रसमेतस्य
नस्यऋत्विजः नादेयैःशांतिकुंभस्थैश्चान्यकुंभस्थितोदकैः अभिषिंचेत्ततःपश्चात्पल्लवैःकलशास्थितैः समुद्रज्येष्ठा इत्याद्यैरुचायंताइत्यृचेनच
पस्यृचेनैवदेवस्यत्वेतिमंत्रतः भद्रंदशाक्षरेणैवधामंतेनाभिषेचयेत् अभिषिक्तोहतंवस्त्रंपरिधायप्रभूषितः सशुक्लवस्त्रैःप्रत्येकमंगुलीयक
गंधाक्षतैःपुष्पमाल्यैर्धूपदीपोपहारकैः आचार्यंपूजयेदादौब्रह्माणंतदनंतरम् सदस्यमृत्विजादींश्चयजमानःप्रपूजयेत् सुवर्णंयत्समाख्या
नदक्षिणा आचार्यायचयद्दत्तंब्रह्मणेतुतदर्धकम् ब्रह्मवच्चसदस्यायययथावित्तानुसारतः अभिषिक्तेभ्योविप्रेभ्योदक्षिणांचप्रदापयेत् सर्वे
भ्यस्तदानीमेवदापयेत् सहिरण्यांसवस्त्रांचसर्वाभरणभूषिताम् धेनुंपयस्विनींदद्यादाचार्यायसवत्सकाम् तत्तत्कुंभंचऋत्विग्भ्यःसहिर
म् तत्रस्थेभ्यश्चविप्रेभ्योहेमवित्तानुसारतः यद्युक्तदक्षिणाभावेप्यनुक्तेहोमकर्मणि हिरण्यंदक्षिणांदद्यात्तदानीमल्पिकामपि ग्राह्याशीर्वच
णिपत्यक्षमापयेत् सहस्रंभोजयेद्विप्रांश्छतंवादशकंतथा घृताक्तैर्भक्ष्यभोज्यैश्चअभावेन्निहृतान्नकैः बंधुभिःसहभुंजीततथापुत्रादिभिःस्वयम्
एवंयःकुरुतेशांतिंतस्यायुर्वर्धतेसदा अद्भुतोद्भवदोषाश्चनाशंयांतिनसंशयः दृष्टादृष्टाहिदोषाश्चनश्यंतेहिचसर्वदा आयुरारोग्यमैश्वर्यंप्राप्यकीर्तिं
चविंदति स्त्रीणांचपुत्रपौत्राणांवर्धनेकल्पमायुषा सर्वान्कामानवाप्नोतिशौनकस्यवचोयथा वसिष्ठसंहितायाम् हस्तैःषोडशभिःकार्यंचतुरस्रंसमंत
तः मंडपंयज्ञियैर्वृक्षैरथवानवदारुभिः हस्तैश्चतुर्भिस्तन्मध्येकुंडंकार्यंसमंततः समंततश्चतुर्भिरित्यन्वयः तथाचक्षेत्रफलेनषोडशहस्तंकुंडम् स्थानं

हस्तैश्चतुर्भिश्चवमत्रयसमन्वितम् षडंगुलोन्नतस्त्वाद्योद्वादशांगुलविस्तृतः दशांगुलोन्नतोमध्ये अष्टांगुलसविस्तृतः चतुर्दशांगुलोत्सेधश्चतुरंगुल
विस्तृतः तृतीयवप्रःकर्तव्योयोनिश्चैकातुपश्चिमे चतुर्दशांगुलैर्दीर्घाचोन्नताषोडशांगुलैः हीनाधिकानकर्तव्याविस्तारःषड्भिरंगुलैः कुंडस्यलक्षणंत्वे
कंकोटिहोमेतुसर्वदा ईशान्यांवेदिकाकार्यासार्धहस्तप्रमाणतः उन्नताविस्तृताकार्याप्रागुदक्प्रवणाशुभा सर्वदेवमयीत्वाद्याशिवपूजापुरःसरम् य
स्तानर्चयेत्तत्रपूर्वोक्तविधिनाततः पालाशसमिदाज्यान्नैर्मुखांतेपृशतंपृथक् अघोरमंत्रेणततोग्रहहोमंचकारयेत् तिलहोमंव्याहृतिभिर्घृताक्तंजु
ततः द्वारेषुजापकैःस्वस्ववेदपारायणंक्रमात् चमकंनमकंसूक्तंपुरुषोक्तांगजापकैः होमंनवभिराचार्यैःकारयेद्ब्राह्मणैःसह नैवेद्यांतंततः
शांतिवाचनपूर्वकम् ब्राह्मणान्भोजयेत्पश्चात्स्वयंभुंजीतबंधुभिः शिवविष्णुकथालापैर्दिनशेषंनयेत्ततः एवंयावत्कोटिहोमस्तावत्कार्य
तदर्धंवातदर्धंवालक्षहोममथापिवा कार्यदोषानुसारेणवित्तशाठ्यविवर्जितः होमांतेदक्षिणांदद्याच्चतुर्विंशतिऋत्विजः प्रतिद्विजमलंका
ष्कशतद्वयम् तदर्धंवातदर्धंवादोषवित्तानुसारतः उल्कासाधारणीशांतिरुत्पातानामतःपरं उत्पाताश्चैवतच्छांतिर्वक्ष्यतेत्रपृथक्पृथक् ना
म् देवालयेस्वगृहेवाईशान्यांपूर्वतोपिवा कुंडंलक्षणसंयुक्तंकल्पयेन्मेखलायुतम् गृह्योक्तविधिनातत्रस्थापयेच्चहुताशनम् जुहुयादाज्यभ
ष्टोत्तरंशतम् यतइंद्रभयामहेस्वस्तिदाघोरमंत्रकैः समिदाज्यचरुव्रीहितिलैर्व्याहृतिभिस्तथा कोटिहोमंतदर्धंवालक्षहोममथापिवा यथा
...कल्पना एकविंशतिरात्रंवापक्षंपक्षार्धमेववा पंचरात्रंत्रिरात्रंवाहोमकर्मसमाचरेत् दक्षिणांचततोदद्यादाचार्यायकुटुंबिने

त्रपालार्कदुर्गाक्षोण्यंगदेवताः तासांप्रीत्यैजपःकार्यःशेषंपूर्ववदाचरेत् ऋत्विग्भ्योदक्षिणांदद्यात्षोडशेभ्यःस्वशक्तितः अद्भुतस
र्गः सावित्र्यालक्षहोमंचप्रभुभैरेवविशारदः गांभूमिंचहिरण्यंचधान्यंवस्त्रंतथैवच दद्याच्चगुरवेग्रामंधेनुंवासोयुगंतथा अलंकारैश्च
प्रीतयेप्रीतमानसः अनेनविधिनाभौमसद्भुतंशमयेद्गुरुः एषएवविधिर्ज्ञेयअंतरिक्षाद्भुतेषुच विशेषोत्रतुसावित्र्यादशलक्षंतुहो
समाहितमनाःकुर्याच्चघृतकंबलं धेनूनांद्वादशंदेयंशतनिष्कसमायुतम् गुरवेदीयमानंतुरामदेयंबराद्भुतम् दिव्याद्भुतेषुकर्तव्यःको
हितैः गोसहस्रंचदातव्यंगुरवेदक्षिणाविधौ एषःप्रोक्तोविधिःसम्यग्दिव्यारिष्टविपत्करः कोटिहोमाशक्तौच अल्पफलदिव्योत्पातेअ
शांतिःकर्तव्या अद्भुतसागरे प्रयतस्तेषुसर्वेषुदिव्येष्वद्भुतकेष्वपि महाशांतिंबुधःकुर्यादमृतांविश्वभेषजामितिगर्गोक्तेः अथर्वमु
तेष्वपिसर्वेषुत्रिविधेषुनसंशयः दिव्यांतरिक्षभौमेषुअमृतासंस्मृताबुधैः विष्णुधर्मोत्तरे सर्वोत्पातप्रशमनीअमृताचाभयास्मृता इ
करभट्टकृतेशांतिसारेउत्पातशांतयः मदनरत्नेमात्स्ये दिव्यांतरिक्षभौमेषुशांतिरत्राभिधीयते विशेषेणतुभौमेषुशांतिःकार्यातथाभवेत्
अभयाचांतरिक्षेषुसौम्यादिव्येषुपार्थिव विजिगीषुःपरान्राजन्भूतिकामश्चयोभवेत् विजिहीर्षुःपरानेवमभियुक्तस्तथापरैः तथाभिचारशं
यांशत्रूणामपिनाशने भयेमहतिवाप्राप्तेअभयाशांतिरिष्यते राजयक्ष्माभिभूतस्यक्षयक्षीणस्यचाप्यथ सौम्याप्रशस्यतेशांतिर्यज्ञकामस्य
चाप्यथ अनिवृष्ट्यामनावृष्ट्यांशलभाखुभयेतथा प्रसक्तेषुचचौरेषुवैष्णवीशांतिरिष्यते पशूनांमारकेप्राप्तेनराणामपिदारुणे भूतेषुदृश्य

रात्र्यपालकेदुर्गाक्षोण्यंगदेवताः तासांप्रीत्यैजपःकार्यः शेषंपूर्ववदाचरेत् ऋत्विग्भ्योदक्षिणांदद्यात्षोडशेभ्यःस्वशक्तितः
र्गः सावित्र्यालक्षहोमंचश्रुभैरेवविशारदः गांभूमिंचहिरण्यंचधान्यंवस्त्रंतथैवच दद्याच्चगुरवेग्रामंधेनुंवासोयुगंतथा अद्भुतस
प्रीतयेप्रीतमानसः अनेनविधिनाभौममद्भुतंशमयेद्गुरुः एषएवविधिर्ज्ञेयअंतरिक्षाद्भुतेषुच विशेषोत्रतुसावित्र्यादशलक्षंतुहोम
समाहितमनाःकुर्याच्चघृतकंबलं धेनूनांद्वादशंदेयंशतनिष्कसमायुतम् गुरवेदीयमानंतुरामदेयंबराद्भुतम् दिव्याद्भुतेषुकर्तव्यः कोटि
र्हितैः गोसहस्त्रंचदातव्यंगुरवेदक्षिणाविधौ एषःप्रोक्तोविधिःसम्यग्दिव्यारिष्टविपत्करः कोटिहोमाशक्तौचअल्पफलदिव्योत्पातेअ
ाशांतिःकर्तव्या अद्भुतसागरे प्रयतस्तेषुसर्वेषुदिव्येष्वद्भुतकेष्वपि महाशांतिंबुधःकुर्यादमृतंविश्वभेषजामितिगर्गोक्तेः अथर्वमु
तेष्वपिसर्वेषुत्रिविधेषुनसंशयः दिव्यांतरिक्षभौमेषुअमृतासंस्मृताबुधैः विष्णुधर्मोत्तरे सर्वोत्पातप्रशमनीअमृताचाभयास्मृता इति
करभद्रकृतेशांतिसारेउत्पानशांतयः मदनरत्नेमात्स्ये दिव्यांतरिक्षभौमेषुशांतिरत्राभिधीयते विशेषेणतुभौमेषुशांतिःकार्यातथाभवेत्
अभयाचांतरिक्षेषुसौम्यादिव्येषुपार्थिव विजिगीषुःपरान्राजन्भूतिकामश्चयोभवेत् विजिहीर्षुःपरानेवमभियुक्तस्तथापरैः तथाभिचारश
यांशत्रूणामपिनाशने भयेमहतिवाप्रासेअभयाशांतिरिष्यते राजयक्ष्माभिभूतस्यक्षयक्षीणस्यचाप्यथ सौम्याप्रशस्यतेशांतिर्यज्ञकामस्य
चाप्यथ अनिवृष्ट्यामनावृष्ट्यांशलभाखुभयेतथा प्रसक्तेषुचचौरेषुवैष्णावीशांतिरिष्यते पशूनांमारकेप्रासेनराणामपिदारुणे भूतेषुदृश्यम

नेषुरौद्रीशांतिस्तथेष्यते वेदनाशेसमुत्पन्नेजननाशेचनास्तिके अपूज्यपूजनेजातेब्राह्मीशांतिस्तथैष्यते भविष्यत्यभिषेकेचपरचक्रभयेषुच
स्वराष्ट्रभंगेभेदेचरौद्रीशांतिःप्रशस्यते अहातिरिक्तपवनेरूक्षेसर्वदिगुत्थितै वैकृतेव्याधिवातेचवायव्याशांतिरिष्यते अभिशापेभयेप्राप्तेभा
वीस्यात्तथैवच जातप्रसववैकृत्येप्राजापत्यामहाभुज उपस्करणांवैकृत्येत्वाष्ट्रीपार्थिवनंदन अश्वानांशांतिकामस्यतद्विकारेतथोत्थिते अ
श्वान्कामयमानस्यगांधर्वीशांतिरिष्यते गजानांशांतिकामस्यशांतिरांगिरसीमता पिशाचादिभयेजातेनैर्ऋतेनैर्ऋतीस्मृता अपमृत्युभयेजा
ःस्वप्नेपिमहाभुज याम्यांतुकारयेच्छांतिंसंप्राप्तेमारकेतथा धननाशेसमुत्पन्नेकौबेरीशांतिरिष्यते वृक्षाणांतुतथार्चानांवैकृतेसमुप
भूमिकंपेतथाशांतिंपार्थिवींसंप्रयोजयेत् प्रथमेदिनयामेतुरात्र्यांवामनुजोत्तम प्रथमेयामइतिरात्र्यपिसंबध्यते एवमुत्तरत्रापि हस्ते
चित्रायामादित्येचाश्विभेतथा आर्यम्णसौम्यजातेषुवायव्येत्वद्भुतेषुच द्वितीयेदिनयामेतुरात्रौचरविनंदन पुष्याग्नेयविशाखासुपित्र्ये
षुच आजंपूर्वाभाद्रपदा उत्पातायेतथाभाग्येआग्नेयीतेषुकारयेत् भाग्येपूर्वास्फ तृतीयेदिनयामेतुरात्रौचरविनंदन रोहिण्यांवैष्
सवेवैश्वदेवते ज्येष्ठायांचतथामैत्रेयेभवंत्यद्भुताःक्वचित् ऐंद्रीतेषुप्रयोक्तव्याशांतीरविकुलोद्वह चतुर्थेदिनयामेचरात्रौचरविनंदन
तथार्द्रायामाहिर्बुध्न्येचवारुणे मूलेचजलदैवत्येभवंत्यद्भुतास्तथा वारुणीतेषुकर्तव्यामहाशांतिर्महीक्षिता मित्रमंडलवेलासुयेभवंत्यद्भुता
चशांतिद्वयंकार्यंनिमित्तेसतिनान्यथा एताःशांतयआथर्वणेप्रसिद्धाः अथविशेषशांतयः तत्रदेवताविकारेहेमाद्रौगर्गः देवतार्चाः

[illegible] आरटंतिचरोदंतिप्रस्विदंतिसहंतिच उत्तिष्ठंतिनिषीदंतिप्रधावंतिवमंतिच भजंतिविकृताश्चेष्टामानुषाणांभयावहाः अ
स्वावातिष्ठंतिस्थानात्स्थानंभ्रमंतिच वमंत्यग्निंतथाधूमंस्नेहरक्तंतथावसाम् एवमादीनिदृश्यंतेविकाराःसहजोत्थिताः लिंगायतनचि
संनरोचयेत् राज्ञोवाव्यसनंतत्रसचदेशोविनश्यति देवयात्रासुचोत्पातान्दृष्ट्वादेशभयंवदेत् देवतार्चाविकारेषुअंतेष्वेवपुरोहितः दे
वैस्नात्वाद्याच्छाद्यभूषयेत् पूजयेत्तांमहाभागगंधमाल्यान्नसंपदा मधुपर्केणविधिवदुपतिष्ठेदनंतरम् तल्लिंगेनचमंत्रेणस्थालीपाके
पुरोधाजुहुयाद्वन्हौसप्तसप्तमतंद्रितः विप्राश्चपूज्यामधुरान्नपानैःसदक्षिणंसप्तदिनंनरेंद्र प्राप्तेष्टमेन्हिक्षितिगोप्रदानैःसकांचनैःश
म् अथाग्निविकारेगर्गः अग्निःप्रदीप्यतेयत्रराष्ट्रेभृशमनिंधनः नदीप्यतेचेंधनवांस्तद्राष्ट्रंपीड्यतेनृप प्रासादतोरणद्वारनृपवेश्म
तेचयत्रदह्यंतेतत्रराजभयंवदेत् विद्युतावाप्रदह्यंतेतत्रापिनृपतेर्भयम् अनैशानितमांसिस्युर्विनापांसुरजांसिच धूमश्चानग्निजोयत्रत
द्भयम् तडिद्विनाभ्रंगगनेभयंस्याद्वृष्टिवर्जिते दिवासतारेगगनेतथैवभयमादिशेत् ग्रहनक्षत्रवैकृत्येताराविकृतिदर्शने पुत्रवाहनदारेषुचं
दगृहेषुच स्वभावाद्वापिहीयेतधेनुवत्सादिकंचयत् लोहायुधविकारःस्यात्तत्रसंग्राममादिशेत् त्रिरात्रोपोषितस्तत्रपुरोधाःसुसमाहितः समिद्भिःक्ष
रवृक्षाणांसर्षपैश्चघृतेनच होमंकुर्यादग्निमंत्रैर्ब्राह्मणांश्चैवभोजयेत् दद्यात्सुवर्णंचतथाद्विजेभ्योगांचैववस्त्राणितथाभुवंच एवंकृतेतत्समुपैतिनाशं
यदग्निवैकृत्यभवंद्विजेंद्र अथवृक्षोत्पातशांतिः गर्गः पुरेषुयेषुदृश्यंतेपादपादैवचोदिताः रुदंतोवाहसंतोवावमंतोवारसान्भुवि अरोगोवासरोगोवानि

मेवविचारयेत् अरोगावाविनावातंशाखांमुंचंतिपादपाः पुष्पंजलंतथाकाष्ठं दर्शयंतिचपादपाः पूर्वावस्थांदर्शयंतिफलंपुष्पमनार्तवे क्षीरंस्नेहंस्कर
स्कंमधुतोयंस्रवंतिवा शुष्यंत्यरोगाःसहसाशुष्कारोहंतिवापुनः उत्तिष्ठंतीहपतिताःपतंतिचतथोत्थिताः तत्रवक्ष्यामितेब्रह्मन्विपाकेफलमेवच रोद
नेव्याधिरत्येतिहसनेदेशविभ्रमः शाखाप्रपतनेकुर्यात्संग्रामंयोधपातनम् बालानांमरणंकुर्याद्बालानांफलपुष्पतः स्वराष्ट्रभेदंकुरुतेफलपुष्पम
र्तवम् क्षीरंसर्वत्रगंभीरंस्नेहंदुर्भिक्षलक्षणम् वाहनापचयंमद्येरक्तेसंग्राममादिशेत् मधुस्रावेभवेद्व्याधिर्जलस्रावेणवर्षति अरोगशोषणं
ब्रह्मन्दुर्भिक्षलक्षणम् शुष्केषुसंप्ररोहत्सुवीर्यमन्नंमहीपते उत्थानेपतितानांचभयंभेदकरंभवेत् स्थानात्स्थानेतुगमनेदेशभंगेतथा
ल्पत्स्वपिचवृक्षेषुस्वनत्स्वपिधनक्षयम् एतत्पूजितवृक्षेषुसर्वराजोपिपच्यते पुष्पैःफलैर्वाविकृतेराज्ञोमृत्युंतथादिशेत् अन्येषुचैववृक्षे
र्षतेंद्रितः आच्छादयित्वातंवृक्षंगंधमाल्यैर्विभूषयेत् वृक्षोपरितथाछत्रंकुर्यात्पापप्रशांतये शिवमभ्यर्चयेद्देवंपशुंचास्मैनिवेदयेत् मूले
षुहुत्वारुद्रंजपेत्ततः मध्वाज्ययुक्तेनतुपायसेनसंपूज्यविप्रांश्चभुवंचदद्यात् गीतेननृत्येनतथार्चयेत्तंदेवंहरंपापविनाशहेतोः इतिवृक्षोत्पात
द्भुतसागरेऔशनसे अश्वत्थेपुष्पितेक्षिप्रंब्राह्मणास्तुद्युदुंबरे प्लक्षेवैश्यास्तुपीड्यंतेन्यग्रोधेदस्यवस्तथा कदंबइक्षुर्वंशोवापुष्पितश्चेत्कथंच
ष्पितेयत्रमाणजंबूर्धवस्तथा शृंगवेरोथवायत्रमासैःषड्भिर्जनक्षयः कुसुमेकुसुमोत्पत्तिःपरचक्रागमंवदेत् औदुंबराणांसमिधोजुहुयाद्युतंततः
भिर्भिर्गिरपमोन्ययेद्वैसदक्षिणाम् कदलीगर्भमूर्धन्यःप्ररोहंतिगृहेयदि अरण्यंसभवेद्देशोगर्गस्यवचनंयथा सहिरण्यंवृषंदद्याद्द्विजायोदुंबरीसा

...न्नारुद्रेति भिभ्रणंहातव्याचसहस्रधा अथवृष्टिवैकृतशांतिः गर्गः अतिवृष्टिरनावृष्टिर्दुर्भिक्षायोभयंमतं अनृतौतुदिवानंतावृष्टिर्व्या...
यायतु अनभ्रवैकृताश्चैवविज्ञेयाराजमृत्यवे अनभ्रवैकृतामेघमंतरेणजातगर्जितादयः शीतोष्णानांविपर्यासेत्रऋतूनांरिपुजंभयं ...
वर्षतेयत्रतत्रशस्त्रभयंभवेत् फलंपुष्पंतथाधान्यंपरिणातिभयायतु पांसुजंतुपलानांचवर्षणेरोगजंभयं छिद्रंवान्नप्रवर्षणेसस्या... पर...
धनम् विरजस्केरवौव्यभ्रेयदाछायानदृश्यते दृश्यतेतुप्रतीपावातत्रदेशेभयभवेत् प्रतीपाप्रतिकूलाछायाविपरीतछायेत्यर्थः ...
...त्रौश्वेतंयाम्योत्तरेणतु इंद्रायुधंतथादृष्ट्वाउल्कापातंतथैवच दिग्दाहपरिवेषोचगंधर्वनगरंतथा परचक्रभयंविंद्यादेशोपद्रवमेवच...
...न्यसमीरणानांयागस्तुकार्योविधिवद्द्विजेंद्रः धान्यानिगोकांचनदक्षिणाश्चदेयाद्विजानामघनाशहेतोः इतिवृष्टिवैकृतशांतिः अथज...
...कृतशांतिः गर्गः नगरादपसर्पंतेसमीपउपयांतिच नद्योनदप्रस्रवणानिरस्तावैभवंतिवा विवर्णकलुषंतप्तफेनावर्ततुसंकुलं क्षीरंस्नेह...
...कवहंतेव्याकुलोदकम् षण्मासाभ्यंतरेनत्रपरचक्रभयंविदुः जलाशयानदंतेचप्रज्वलंतिकथंचन विमुंचंतितथाब्रह्मन्ज्वालाधूमंरजांसि...
अरवातेवाजलोत्पत्तिःसस्त्वावाजलाशयाः संगीतशब्दादृश्यंतेजनमारभयंविदुः दिव्यंमहाभयंविद्धिमधुमान्नावसेचनं जप्तव्यावारुणाम...
...त्रास्तैश्चहोमोजलेभवेत् मध्वाज्ययुक्तंपरमान्नमत्रदेयंद्विजानामथभोजनार्थं गावश्चदेयाःसितवस्त्रयुक्तास्तथोदकुंभाःसकलाघशांत्यै इति
जलाशयवैकृतशांतिः अथोपस्करवैकृतशांतिः गर्गः यांतियानान्ययुक्तानियुक्तान्यपिनयांतिचेत् चोद्यमानानितत्रस्यान्महद्भयमुपस्थितम्

वाद्यमानानवाद्यंतेवाद्यंतेवाप्यनाहताः अचलाश्चचलंत्येवनचलाश्चचलंतिच आकाशेतूर्यनादश्चगीतगंधर्वनिस्वनः काष्ठदर्वीकुठारादिविकारंकुरुतेयदि
गवलंस्थूलसंघाश्चस्त्रियंस्त्रीवापिघातये उपकारादिविकृतौघोरशस्त्रभयंभवेत् वायोस्तुपूजांद्विजसक्तुभिश्चकृत्वानियुक्तांश्चजपेच्चमंत्रान् दद्यात्
भूतंपरमान्नमत्रसदक्षिणंतेनशमोस्यभूयात् इत्युपस्कारेवैकृतिशांतिः अथमृगपक्षिवैकृतशांतिः गर्गः प्रविशंतियदाग्रामानारण्यामृगपक्षि
णः अरण्यंयांतिवाग्राम्याःस्थलंयांतिजलोद्भवाः स्थलजावाजलंयांतिघोरावाशांतिनिर्भयाः राजद्वारेपुरद्वारेशिवाश्चाप्यशिवप्रदाः दिवारा
रावापिरात्रौवापिदिवाचराः ग्रामांस्त्यजंतियामंवाशून्यतांतस्यनिर्दिशेत् दीप्तंवासंतिसंध्यासुमंडलानिचकुर्वते वासंतेविस्वरंयत्रतदा
लभेत् प्रदोषेकुक्कुटोवासेद्धेमंतेवापिकोकिलः अर्कोदयेर्काभिमुखीशिवावापिभयंदिशेत् गृहेकपोतःप्रविशेत्क्रव्यादोमूर्ध्निलीयते
वाकुर्यान्मृत्युर्गेहपतेर्भवेत् क्रव्यादोगृध्रकाकादिः प्राकारद्वारगेहेषुतोरणापणवीथिषु केतुच्छत्रायुधाद्येषुक्रव्यादःसंश्रयेद्यदि जायते
कोमधुवादृश्यतेयदि सदेशोनाशमायातिराजावाम्रियतेतदा मूषिकाःशलभानृदृष्ट्वाप्रभूतक्षुद्भयंवदेत् काष्ठोन्मूकास्थिश्रृंगाःस्यात्
दना दुर्भिक्षवेदिनोज्ञेयाःकाकाधान्यमुषोयदि जनानभिभवंतश्चनिर्भयारण्यवेदनाः काकोमैथुनयुक्तश्चेच्छ्वेतःसयदिदृश्यते राजा
त्रसदेशोवाविनश्यति उलूकोवासतेयत्रनिपतेद्वातथागृहे क्षयोगृहपतेर्मृत्युर्धननाशस्तथैवच वासतेकुशब्दंकरोति मृगपक्षिविकारेषु
सदक्षिणम् देवाःकपोतइतिचजप्तव्यंपंचभिर्द्विजैः वसुदवन्निवैकेतहृयागावश्चदक्षिणाः जपेच्छकुंतसूक्तंचसनोवेदशिरांसिच गावश्चदेय

...स्त्वयुगोत्तरीयाः एवंकृतेशांतिसुपैतिपापंमृगैर्द्विजैर्वाविनिवेदितंयत् इतिमृगपक्षिवैकृतशांतिः अद्भुतसागरेनारदः मध्या...
...र्धरात्रेच उदयेस्तमयेथवा ग्राममध्येयदाविप्रफत्कारंकुरुतेशिवा ग्रामोत्पादोभवेत्तत्रराज्ञोमरणमादिशेत् जुहुयात्संचसाहस्रंजातवेदसमं...
धेनुंचदक्षिणांदद्यात्सुवर्णधान्यमेववा अस्मिन्नाशुकृतेशांतिःशुभंग्रामस्यवैभवेत् अथाकस्मिकप्रासादपतनशांतिः गर्गः प्रासादतो...
द्वारप्राकारवेश्मनाम् अनिमित्तंतुपतनंदृढानांराजमृत्यवे रजसावाथधूमेनदिशोयत्रसमाकुलाः आदित्यचंद्रताराश्चविवर्णाभयवृद्ध...
यत्रदृश्यंतेब्राह्मणाश्चविधर्मिणः ऋतवश्चविपर्यस्ताअपूज्यंपूजयेज्जनः नक्षत्राणिवियोगानितन्महद्भयलक्षणम् केतूदयोपरागौच...
...सूर्ययोः ग्रहर्क्षविकृतिर्यत्रतत्रापिभयमादिशेत् स्त्रियश्चकलहायंतेबालानिघ्नंतिबालकान् क्रियाणामुचितानांचविच्छित्तिर्यत्रदृश्यते
...नदृश्येतधूमयानोथशाम्यति क्रव्यादावायसावाहायांतिचोत्तरतस्तथा पूर्णकुंभाःस्रवंतेचवन्हिर्वाविप्रलुप्यते मंगल्यध्वनयोयत्रनश्रूयं...
...क्षवथुर्बाधतेवाथप्रोत्साहेसतिनर्दितः नदैवतेषुवर्ततेयथावद्ब्राह्मणेषुच मंदघोषाणिवाद्यानिवाद्यंतेविस्वराणिच गुरुमित्रद्विषोयत्रशत्रुपूं...
...रताजनाः ब्राह्मणान्सुहृदोमान्यान्जनोयत्रावमन्यते शांतिमंगलहोमेषुनास्तिक्यंयत्रमन्यते राजावाम्रियतेतत्राथवादेशोविनश्यति राज्ञोवि...
नाशेसंप्राप्तेनिमित्तानिनिबोधमे ब्राह्मणान्प्रथमंद्वेष्टिब्राह्मणांश्चविनिंदति ब्राह्मणस्वानिवादत्तेब्राह्मणांश्चजिघांसति नतान्स्मरतिकृत्येषुया...
...चितश्चान्वसूयति रमतेनिंदयावैषांप्रशंसांनाभिनंदति अपूर्वंतुकरंलोभात्तथापातयतेजने एतेष्वभ्यर्चयेत्सम्यक्सपत्नीकान्द्विजोत्तमान् भोज्या...

निचैवकार्याणिस्कराणांबलयस्तथा गावश्चदेयाद्विजपुंगवेभ्योभुवंतथाकांचनमंबराणि होमश्चकार्योद्विजपूजनंचएवंकृतेशांतिमुपैतिपापम् मयूर
चित्रे यदाकूटककटायंतेभवनान्यायुधानिच मासाभ्यंतरमात्रेणनदासंग्राममादिशेत् दिव्यावैकादशीशांतिःकरणीयाविपश्चिता अथनानोत्पातशां
तिः गर्गः औत्पातिकींमहाशांतिंतत्वतःशृणुमेधुना यत्रव्याधिरनावृष्टिःपरचक्रमुपस्थितम् दुर्भिक्षंजननमारोवाराज्ञोमरणमेववा तत्रशांतिक्रम
क्तोमहाक्रतुमिहारभेत् पुनर्होमश्चकर्तव्योबृहस्पतिमतंयथा गावस्तथैवदातव्यास्तथैवायुर्विवर्धनीः राज्ञोभिषेकंकुर्वीततथैवचसक्रत्विज
रात्रंसप्तरात्रंवाउपोष्यचपुरोहितः औदुंबरीणांविधिवत्समिधांचशतंदहेत् सावित्र्याकारयेत्कर्मततःपापंप्रशाम्यति अत्युष्णमनिशीतंच
मनूदकम् आनर्त्तवंपुष्पफलमतिमात्रंचमारुतः भैरवंचातिमात्रंचरुदंतिमृगपक्षिणः विद्युत्स्तनितनिर्घोषमनभ्रेवातिवर्षणम् सिंह
तराणांदर्शनंचचतुष्पथे ईदृशैर्लक्षणोत्पातैर्विनाशमभिलक्षयेत् अन्योत्रजायतेराजातथाचान्यःपुरोहितः तत्रशांतिंप्रवक्ष्यामिपापप्र
भाम् औदुंबरीणांसमिधांशतमष्टोत्तरंदहेत् सहक्षीरघृताक्तानांमहत्सूत्रगणैःशुभैः हुत्वाशतसहस्रंतुपरांशांतिमवाप्नुयात् यमलानिच
भानिनीचवाहनाः मुंडवक्रमुखव्यश्चैवकुटाश्चकुणपास्तथा अमानुषामानुषाणांगजानांमृगपक्षिणाम् जायंतेउपरिदंतावेअश्वाश्च
बहुशीर्षमशीर्षंवाबहुवर्णमवर्णकम् एकशृंगमशृंगंवाचतुर्भुजमथाफजम् दीर्घकर्णमकर्णंवागजकर्णमुखंतथा व्यालव्याघ्रमुखाकारंबि
...रूपाणिदृश्यंतेयत्रगौतम तत्रसंग्रामतोब्रूयाद्भयंक्षयकरंमहत् जनक्षयंचपौराणांराज्ञःश्रेणिवधंतथा तत्रशांतिंप्रवक्ष्या

पप्रणाशिनीम् खदिराश्वत्थसमिधांसहस्राष्टोत्तरंदहेत् विरूपाक्षेणमंत्रेणविधिवत्सुसमाहितः विरूपाक्षेणअग्निर्मूर्द्धेत्यादिना तत्रहिविरू
ऋषिः दद्याच्चकपिलांधेनुंहुतांतेशांतिमिच्छता ततस्तच्छाम्यतेपापंजातवेदोवचोयथा यत्राकार्याणिकार्यंतेअदंड्येदंडपातनम् अपूज्यार्श्चपू
नेमान्यांश्चैवावमन्यते अनड्वांश्चपिबेत्धेनुंचानड्वाहंपिबेद्यदि विधुनोतिचगोर्वत्संप्रजातंनाभिनंदति प्रजातंवत्संगोरितिशेषः मैथुनंनि
कालेमृगपक्षिणाम् ब्राह्मणाभिन्नमर्यादानतिष्ठंतिस्वकर्मसु ईदृशैर्लक्षणोत्पातैर्विद्यादेशस्यविभ्रमम् कलहंजायतेघोरंदुर्भिक्षंजनमा
मात्यविनाशंचपौराणांचमहद्भयम् तत्रशांतिंप्रवक्ष्यामिसर्वपापप्रणाशिनीम् प्रज्वाल्याश्वत्थसमिधःकृत्वासस्तरणंमहत् औदुंबरीणां
त्राष्टोत्तरंबुधः जुहुयाद्विधिवद्वह्नौपरांशांतिमभीप्सता दासीदाससमायुक्तंगृहंदद्याद्द्विजातये ततःप्रशाम्यतेपापंवसिष्ठस्यवचोयथा
लिकायत्रग्रामेषुनगरेषुच दृश्यंतेह्यतिमात्रंचेदूर्ध्वंवंशकृतालयाः शांतिगृहेदेवगृहेतथाचनृपतेर्गृहे उपर्युपरिमात्रंतुदृश्यंतेवेश्मनस्तदा
कामशकादंशाअतिमात्रभयावहाः ईदृशैर्लक्षणोत्पातैर्महाचोरभयंभवेत् द्रव्याणांहरणंब्रूयात्परचक्रस्यचागमम् तत्रशांतिंप्रवक्ष्यामि
श्वामित्रोपदर्शिताम् अश्वत्थसमिधश्चैवहुत्वाचाष्टोत्तरंशतम् पूर्णपात्राणिवैदद्याद्धुतांतेभूरिदक्षिणाम् दासीदाससमायुक्तंगृहंदद्याद्द्विजातये
तिलपात्रंप्रदातव्यंतिलान्जुहुयात्संयतः अनग्निर्ज्वलतेयत्रविधूमेधूमदर्शनम् अलयुक्तमयुक्तंवापुरंप्रविशतेतदा बालैःसहकुमारश्चकलहंयत्रकु
ते कलहंब्राह्मणानांचसेनापतिपरिग्रहम् गवाद्यानांभवेन्नित्यंयथाघोषनिवासिनां श्रेष्ठिनांसार्थवाहानांकलहोयत्रजायते राजामात्यवि

नाशंचपौराणांचमहद्भयम् तत्रशांतिंप्रवक्ष्यामिपितामहवचोयथा पालाशसमिधश्चाग्नौसहस्राष्टोत्तरंदहेत् ब्राह्मणान्भोजयेत्तत्रपरमान्नेनशांतये
प्राकारेनगरेद्वारगोपुराट्टालकेषुच रथ्याचतुष्पथेचैवदेवतायतनेषुच निवासंयत्रकुर्वंतिबकाःकाकाश्चकौशिकाः गृध्राःपरभृतश्चैवआरण्यामृगप
क्षिणः निरूहेत्कलहंघोरंसिद्धानांवचनंयथा निरूहेत्तर्कयेत् तत्रशांतिंप्रवक्ष्यामिनारदेनोपलक्षिताम् अश्वत्थसमिधानांतुघृताक्तानांविभाव
सौ वायव्येनेहमंत्रेणनिवेद्यंचसुशोभितम् ततस्तुशाम्यतेपापंनारदस्यवचोयथा मृतःश्मशानंयोनीतउपजीवतिमानवः गृहेयस्यप्रविष्टोसौ
द्र्यकदाचन अचिरान्मृत्युमायातिहतमत्रपरिग्रहः सावित्र्याष्टसहस्रेणक्षीरशांतिंचकारयेत् क्षीरशांतिश्चरक्तानामेकवर्णानामिन
ष्यमाणा कपिलांतिलकांस्यंचहुतांतेभूरिदक्षिणाम् ततस्तच्छाम्यतेपापंधर्मराजमतंयथा श्वावृगालोथवागृध्रःकाकोवायदिमानुष
मनान्मांससमादायपुरमध्येप्रवेशयेत् नगरंपत्तनंवापिग्रामंवायदिवागृहम् अचिरेणैवकालेनतच्छ्मशानंभविष्यति चौरमंडलपातं
स्यचागमम् अनारोग्यमनावृष्टिर्दुर्भिक्षंजनमारकम् संग्रामशस्त्रसंघातंक्षिप्रमेवविनिर्दिशेत् तत्रशांतिंप्रवक्ष्यामियथापापंप्रश
श्वत्थसमिधोगृह्यतिलांश्चमधुसंयुतान् विरूपाक्षेणमंत्रेणविरूपाक्षान्सशोणितान् तिलपात्रोपहारंचक्षीरशांतिंचकारयेत् ततश्च
पंप्रजापतिमतंयथा सौत्रामणीपाकयज्ञःपशुबंधस्तथैवच कृतवश्चप्रवर्त्ततेअनधीत्यकृतोदयाः यस्मिंस्तथाप्रवर्त्ततेक्रोधलोभभय
दत्वादक्षिणांसम्यङ्महदुत्पातलक्षणम् अनारोग्यमनावृष्टिर्दुर्भिक्षंजनमारकम् ज्वरःकासस्तथाश्वासकच्छूददुविकोष्टिकाः

गाक्षिरोगाश्च पाडुरोगो गलग्रहः आधयश्च प्रवर्त्तंते दुर्दुष्टैः स्वल्पलक्षणैः तत्र शांतिं प्रवक्ष्यामि बृहस्पतिमतं यथा त्रिरात्रोपोषितो भूत्वा हवि
शीः पुरोहितः सक्षीराणां घृताक्तानां समिधानां शतं दहेत् पलाशस्येति विशेषः ततस्तच्छाम्यते पापं बृहस्पतिमतं यथा इति नानोत्पातशां
थ जनमारीशांतिः हेमाद्रौ गर्गः रुद्रप्रकोपजो यस्माज्जनमारः प्रवर्त्तते तस्मात्प्रसादयेद्यत्नाद्देवदेवं महेश्वरम् गाणपत्येन विधिना
रसा तथा यामलेन विधानेन कुर्याद्देवप्रसाधनम् शिवसूक्तमुमासूक्तं जपेच्च शतरुद्रियम् बल्योपहारान्विविधांश्चत्वरेषु निवेदयेत्
दुसगणं रुद्रं रात्रावहस्सु च ब्राह्मणान्भक्ष्यभोज्यैश्च दक्षिणाभिश्च तोषयेत् प्रसादिते ततो रुद्रे जनमारो निवर्त्तते उपोषितो नृपः स्नात
ः समाहितः आत्मरक्षां स्वयं कृत्वा ततः शांतिं प्रयोजयेत् इति जनमारीशांतिः हेमाद्रौ मदनरत्ने नृसिंहपुराणे अनावृष्टिमहामारीज्व
न्तथा नरसिंहं समाराध्य ब्राह्मणैर्वेदपारगैः कारयेल्लक्षहोमं तु ग्रामे यश्च नराधिपः नृसिंहमंत्रेण होमः स्मर्यते स्थानत्यागाज्जप
महामारी प्रशाम्यति आथर्वणे तु रौद्री शांतिरुक्ता अथ रविच्छिद्रशांतिः अद्भुतसागरे मयूरचित्रे तिलैर्दूर्वादिभिश्चैव पत्रैश्चैव यवैस्तथा धान्यै
दुंबरीभिश्च श्रीफलैराहुतिक्रिया समासो भोजनं कृत्वा नटप्रेक्षणमादिशेत् व्योममध्यगतं पश्येद्यदि सूर्यद्वयं नरः दधिक्षौद्रघृताक्तानां जुहुयाद्यु
तं शुचिः उपोष्यार्कस्य समिधो धेनुं दद्याद्द्विजातये अथापर्वग्रहणे शांतिः तत्रैव अपर्वणि शशांकार्कौ त्विष्टो नाम महाग्रहः आवृणोति तमः श्यामः
सर्वलोकविपत्तये औदुंबरीः सहस्राणि चाष्टौ च जुहुयाद्बुधः मध्वक्तानि च तान्यत्र जातवेदस मंत्रवित् विप्राय दक्षिणां दद्याद्धेनुं च वृषभं तथा अथ

